श्रीभगवानुवाच- ॥ योमांनामसहस्त्रेणस्तोतुमिच्छति पांडव ॥
॥ सोऽहमेकेनश्लोकेनस्तुतएवनसंशयः ॥१३१॥

श्रीभगवान म्हणतातः- मला जो ह्या नामसहस्त्रें करून स्तवन करण्यास इच्छितो, त्यास मी सहस्त्र नामतुल्यएकाश्लोकानेंही स्तुत होईन यांत संशय नाहीं.

नमोऽस्त्वनंतायसहस्त्रमूर्तयेसहस्त्रपादाक्षिशिरोरुबाहवे ॥
सहस्त्रनाम्नेपुरुषायशाश्वतेसहस्त्रकोटीयुगधारिणेनमः ॥१३२॥

ज्याचा अंत नाहीं, अनंत शरीरें ज्याचीं, तसेंच पाय, डोळे, शिरें, उरू आणि बाहु हेही अनंत आहेत, आणि त्याचप्रमाणें नांवेंही ज्याचीं अनंत आहेत, सर्व प्राण्यांच्या शरिरामध्यें वास करणारा, ज्याचा कधींही नाश नाहीं, अनंत कोटियुगांचा धारक असा जो तूं, त्या तुला नमस्कार असो.

नमःकमलनाभाय नमस्तेजलशायिने ॥
नमस्तेकेशवानंत वासुदेवनमोऽस्तुते ॥१३३॥

हे कमलनाभ, हे जलशायी, हे केशव, हे अनंत, हे वासुदेव तुला नमस्कार असो.

वासनाद्वासुदेवस्य वासितं भुवनत्रयम् ॥

सर्वभूतनिवासोऽसि वासुदेवनमोऽस्तुते ॥१२४॥

तुझ्या स्थितीनें हें सर्व त्रिभुवन स्थित आहे, सर्व प्राणी तुझ्या ठिकाणीं वास करणारे आहेत, हे वासुदेव, तुला नमस्कार असो.

नमो ब्रम्हण्यदेवाय गोब्राम्हणहितायच ॥
जगद्धिताय कृष्णाय गोविंदायनमोनमः ॥१२५॥

ब्रम्हत्वप्रकाशक, गाई ब्राम्हणाचा हितकारी, तसाच जगाचा कल्याण करणारा, पापापासून दूर करणारा, इंद्रियाधिष्ठाता, जो तूं त्या तुला नमस्कार असो.

आकाशात्पतितंतोयं यथागच्छति सागरम् ॥
सर्वदेवनमस्कारः केशवं प्रतिगच्छति ॥ १२६॥

आकाशापासून कोठेंही पडलेलें उदक जसें समुद्राला मिळतें, त्याप्रमाणें कोणत्याही देवते ची आराधना केली असतां ती तुलाच पावते.

एषनिष्कंटकःपंथा यत्रसंपूज्यते हरिः ॥
कुपथंतंविजानीयाद्गोविंदरहितागमम् ॥१२७॥

हरिपूजन हाच निर्दोषमार्ग आहे, ज्यांत गोविंदप्राप्ति नाहीं, अशा मार्गाला कुमार्ग म्हणावें.

सर्ववेदेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ॥
तत्फलं समवाप्नोति स्तुत्वा देवं जनार्दनम् ॥ १३८ ॥

सर्व वेदांमध्यें, सर्व तीर्थांमध्यें जीं जीं पुण्यें आणि जें जें फल सांगितलें तें तें फल जनार्दना तुझ्या स्तवनानें प्राप्त होतें.

यो नरः पठते नित्यं त्रिकालं केशवालये ॥
द्विकालमेककालं वा क्रूरं सर्वं व्यपोहति ॥ १३९ ॥

विष्णु मंदिरांत या स्तवनाचा, त्रिकाळ, अगर दोनवेळां किंवा एक वेळां पाठ जो कोणी करतो त्याचे सर्व व्याप दूर होतात.

दह्यंते रिपवस्तस्य सौम्याः सर्वे सदा ग्रहाः ॥
विलीयंते च पापानि स्तवे ह्यस्मिन् प्रकीर्तिते ॥ १४० ॥

त्याचे सर्व शत्रु दग्ध होतात, नेहमीं त्याला सर्व ग्रह सौम्य होतात, व हें स्तवन केलें असतां सर्व पापें लयास जातात.

येन ध्यातो श्रुतोयेनयेनायं पठ्यतेस्तवः ॥
दत्तानिसर्वदानानिसुराःसर्वेसमर्चिताः ॥१४१॥

हें स्तवन जो कोणी पठण किंवा श्रवण करितो अथवा याचें ध्यान करितो, त्याला सर्व दानें के-ल्याचें व सर्व देवतांच्या पूजनाचें फल प्राप्त होतें.

इहलोकेपरे वापि न भयंविद्यतेक्वचित् ॥
नाम्नांसहस्रंयोऽधीतेद्वादश्यांममसन्निधौ ॥ १४२॥

द्वादशीचे दिवशीं माझे समीप ह्या स्तोत्राचें जो पठण करितो त्याला इहलोकीं आणि परलोकीं कधींही भय प्राप्त होत नाहीं.

शनैर्दहतिपापानिकल्पकोटिशतानिच ॥
अश्वत्थसन्निधौपार्थतुलसीसन्निधौतथा ॥१४३॥

तसेंच अश्वत्थासमीप किंवा तुलसी समीप याचा जो कोणी पाठ करितो, त्याच्या अनंत पातकाच्या राशी भस्म होतात.



पठेन्नामसहस्रंतुगवां कोटिफलंलभेत् ॥

शिवालयेपठेन्नित्यंतुलसीवनसंस्थितः ॥१४४॥

हें सहस्रनाम शिवालयांत किंवा तुलसीवनांत बसून पठण करणाराला कोटि गायी दान केल्याचें फल प्राप्त होतें.

नरोमुक्तिमवाप्नोति चक्रपाणेर्वचोयथा ॥
ब्रह्महत्यादिकं घोरं सर्वपापं विनश्यति ॥१४५॥

तसेंच ब्रह्महत्यादि घोर पातकांचा नाश होऊन मनुष्य मुक्तीला पावतो; असे चक्रपाणि जो महाविष्णु त्याचें वाक्य आहे.

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यामानुशासनिके पर्वणि दानधर्मे भीष्मयुधिष्ठिरसंवादे श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रं संपूर्णम् ॥ श्रीकृष्णार्पणमस्तु शुभंभवतु श्रीरस्तु ॥

**सूचना-** कित्येक लोक विष्णुसहस्रनामाचा पाठ नुसताच करितात व कित्येक लोक न्याससहित याचा पाठ करितात. नुसता पाठ करणारांनीं वर दाखविल्याप्रमाणें पाठ करावा, व ज्यांना न्याससहित पाठ करावयाचा असल्यास त्यांनीं ध्यानाचे पूर्वीं खाली लिहिलेले न्यास वगैरे प-

ठण करून नंतर ध्यानापासून साग्र पाठ करावा.



अस्य श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमंत्रस्य ॥ भगवान् वेदव्यासऋषिः ॥ श्रीविष्णुःपरमात्मा देवता ॥ अनुष्टुप् छंदः ॥ अमृतांशूद्भवो भानुरिति बीजम् ॥ देवकीनंदनःस्रष्टेतिशक्तिः ॥ त्रिसामा सामगःसामेतिहृदयम् ॥ शंखभृन्नंदकीचक्रीतिकीलकम् ॥ शार्ङ्गधन्वा गदाधरइत्यस्त्रम् ॥ रथांगपाणिरक्षोभ्यइतिकवचम् ॥ उद्भवः क्षोभणो देव इतिपरमोमंत्रः ॥ श्रीमहाविष्णुप्रीत्यर्थेजपेविनियोगः ॥ अथन्यासः ॥ विश्वंविष्णुर्वषट्कार इत्यंगुष्ठाभ्यांनमः ॥ अमृतांशूद्भवो भानुरिति तर्जनीभ्यांनमः ॥ ब्रह्मण्यो ब्रह्मकृद्ब्रह्मेतिमध्यमाभ्यांनमः ॥ सुवर्णबिंदुरक्षोभ्य इत्यनामिकाभ्यांनमः ॥ निमिषोऽनिमिषःस्रग्वीतिकनिष्ठिकाभ्यांनमः ॥ रथांगपाणिरक्षोभ्यइतिकरतलकरपृष्ठाभ्यांनमः ॥ विश्वंविष्णुर्वषट्कारइतिहृदयायनमः ॥ अमृतांशूद्भवोभानुरितिशिरसेस्वाहा ॥ ब्रह्मण्यो ब्रह्मकृद्ब्रह्मेतिशिखायैवषट् ॥ सुवर्णबिंदुरक्षोभ्य इति कवचायहुम् ॥ आदित्योज्योतिरादित्यइतिनेत्रत्रयायवौषट् ॥ शार्ङ्गधन्वागदाधरइत्यस्त्रायफट् ॥ इतिहृदयादिन्यासः ॥ अथ ध्यानम् । शांता० ॥ ७ ७

## ॥ अथ शिवसहस्त्रनामप्रारंभः ॥

॥ श्रीगणेशायनमः ॥ ऋषयऊचुः ॥ सूतवेदार्थतत्त्वज्ञशिवध्यानपरायण ॥ मुक्त्यु
पायं वदास्माकं कृपालो मुनिसत्तम ॥ १ ॥ कः सेव्यः सर्ववेदेषु को वाजाप्योमनुःसदा
॥ स्थातव्यं कुत्रवा नित्यं किंवा सर्वार्थसाधकं ॥ २ ॥ सूतउवाच ॥ धन्यान्मन्यामहे
नूनमनन्यशरणान्मुनीन् ॥ वन्याशिनोवनावासान्न्यस्तमन्यून कल्मषान् ॥ ३ ॥ भव-
द्भिः सर्ववेदार्थतत्त्वज्ञानमकल्मषैः ॥ परात्परतरः शर्वः सर्वदा पूज्यतेधिया ॥ ४ ॥ भवद्भिः
सर्ववेदार्थोज्ञातएवास्तियद्यपि ॥ तथापिकिंचिद्वक्ष्यामियथाज्ञातंमयातथा ॥ ५ ॥ पुरा
कैलासशिखरे सुखासीनंजगत्प्रभुम् ॥ वेदांतवेद्यमीशानंशंकरंलोकशंकरम् ॥ ६ ॥ वि
श्वतश्चक्षुषंदेवंविश्वतोमुखमव्ययम् ॥ विश्वतो बाहुमाराध्यंविश्वतः पादमीश्वरम् ॥ ७
॥ निष्कलं निर्गुणंशांतंनिरवंद्यंनिरामयम् ॥ निःप्रपंचंनिराकारं निर्मलंनिरुपाधिकम् ॥
८ ॥ शर्वं प्रसन्नवदनंसर्वाभरणभूषितम् ॥ गौरिभूषितवामांगंब्रह्मविष्ण्वादिसेवितम् ॥ ९
॥ अप्रमेयंजगज्जन्मस्थितिसंहारकारणम् ॥ सोमसूर्याग्निनयनं सोमार्धकृतशेखरम् ॥
१० ॥ बिल्वचंदनलिप्तांगंनवबिल्वदलार्चितम् ॥ व्याघ्रचर्मपरीधानमनंतेंदुरविप्रभम् ॥

११॥ नानामणिगणाकीर्णकिरीटकटकावृतम् ॥ दयासुधार्द्रनयनं वरदाभयपाणिन
म् ॥१२॥ नित्यं संतोषपूर्णांगमुमालिंगितविग्रहम् ॥ विलोक्यातीव संतुष्टः षण्मुखः
साम्बमीश्वरम् ॥१३॥ मत्वा कृतार्थमात्मानं प्रणिपत्य सदाशिवम् ॥ प्रपच्छ सर्वलो-
कानां मुक्त्युपायं कृतांजलिः ॥१४॥ षण्मुख उवाच ॥ विश्वेश्वर महादेव विष्णुब्र-
ह्मादिवंदित ॥ देवानां मानवानां च किं मोक्षस्यातिसाधनम् ॥१५॥ तव नामान्यनंता
नि संति यद्यपि शंकर ॥ तथापि तानि दिव्यानि न ज्ञायंते मयाधुना ॥१६॥ प्रियाणि
तव नामानि सर्वाणि शिव यद्यपि ॥ तथापि कानि रम्याणि तेषु प्रियतमानि ते ॥१७॥
तानि सर्वार्थदान्यद्य कृपया वक्तुमर्हसि ॥ यन्नामस्मरणादेव सद्यो मुच्येत पातकैः
॥१८॥ रसना रससारज्ञा त्वन्नामामृतपायिनी ॥ यस्यास्ति स पुमान् धन्यो मान्यो
हि मनुजैरपि ॥१९॥ जन्मांतरसहस्रेषु तप्तं यदि तपस्तदा ॥ त्वन्नामस्मरणासक्तं
चित्तं जंतोः प्रजायते ॥२०॥ महेशनामामृतदिव्यधारापरिप्लुतांगोऽध्वनिमध्यगोऽ
पि ॥ न शोकमाप्नोति नरो यतोऽहं संरक्षितो वह्निगतः शिवेन ॥२१॥ यतो विभूतिक
वचाः शिवनामाख्यपाणयः ॥ चत्वार एव याम्याश्च चक्रुर्युद्धं पुरा मुदा ॥२२॥ ब्रम्ह-

हत्यासहस्राणि पुराकृत्वापि पुल्कसः ॥ शिवेतिनामविपुलं श्रुत्वामोक्षंगतः
पुरा ॥२३॥ एतेऽपि प्रमथाः शुद्धाः शिवनामामृताशनाः ॥ इंद्राद्यर्चितपादाब्जा
वसंति शिवसन्निधौ ॥२४॥ शिवनामैव संसार महारोगैकशामकम् ॥ नान्यत्सं-
सार रोगस्य शामकं दृश्यते मया ॥२५॥ शिवशंकर विश्वेश महादेवेतियन्मया॥
पूर्वमुच्चरितं युद्धे जयस्तेनाभवन्मम ॥२६॥ शंकरेति महेशेति नामदिव्यंम-
हावने ॥ पुराकृतंपिशाचेन ततस्तस्मात्समोचितः ॥२७॥ समस्तवेदवेदां-
तसारभूतंशिवप्रदम् ॥ शिवनामामृतंदिव्यंपेयंसर्वार्थसाधकम् ॥२८॥
येसंततं शंकरमादरेण मनःसरोजासनसन्निविष्टम् ॥ ध्यायंति शंभुंस्मरणा
नुसक्तास्त एव धन्याः शिवसंमताश्च ॥२९॥ शिवनामामृतास्पृष्टरसनाःशि
वपूजकाः॥ शिवध्यानरतानित्यं संति धन्याः क्वचित् क्वचित् ॥३०॥ इत्यु-
क्त्वावेपमानांगः प्रणिपत्यपुनःशिवम् ॥ कुमारःपार्श्वतस्तस्थौनतमूर्धा कृतां
जलिः ॥३१॥ कुमारोदीरितांवाचंसर्वलोकहितावहाम् ॥ श्रुत्वा प्रसन्न वदनस्त
मुवाच सदाशिवः ॥३२॥ श्री शिव उवाच ॥ साधुसाधु कुमाराद्य सम्यक्

पृष्टं त्वयाधुना ॥ यदिदानीं त्वया पृष्टं तद्वक्ष्ये शृणु सादरम् ॥ ३३॥ एवमेव पुरा गौर्या पृष्टः काश्यामहं तदा ॥ समाख्यातं मया सम्यक् सर्वेषां मोक्षसाधनम् ॥ ३४॥ दिव्यान्यनंतनामानि संत्विदं मध्यगं परम् ॥ अष्टोत्तरसहस्रं तु नाम्नां प्रियतरं मम ॥ ॥ ३५॥ एकैकमेव तन्मध्ये नाम सर्वार्थसाधकम् ॥ मयापि नाम्नां सर्वेषां फलं वक्तुं न शक्यते ॥ ३६॥ तिलाक्षतैर्बिल्वपत्रैः कमलैः कोमलैः शुभैः ॥ पूजयिष्यंति मां भक्त्या यस्त्विदं नामसंख्यया ॥ ३७॥ स पापेभ्यः संसृतेश्च मुच्यते नात्र संशयः ॥ ततो मम अंतिकं याति पुनरावृत्तिदुर्लभम् ॥ ३८॥ एकैकेनैव नाम्ना मामर्चयित्वा दृढव्रताः ॥ श्रेष्ठं फलं प्राप्नुवंति सत्यमेवोच्यते मया ॥ ३९॥ यस्त्विदं नामभिः सम्यक् चिकालं वत्सरावधि ॥ मामर्चयति निर्दंभः स देवेंद्रो भविष्यति ॥ ४०॥ एतन्नामानुसंधाननिरतः सर्वदा मुदा ॥ मम प्रियतरस्तस्मिन् निवसाम्यहमादरात् ॥ ४१॥ तत्पूजया पूजितोऽहं स एवाहं मतो मम ॥ तस्मात्प्रियतरं स्थानमन्यन्नैव हि दृश्यते ॥ ४२॥ हिरण्यबाहुरित्यादिनाम्नां शंभुरहं ऋषिः ॥ देवताप्यहमेवात्र शक्तिर्गौरी मम प्रिया ॥ ४३॥ महेश एव संसेव्यः सर्वैरिति हि कीलकम् ॥ धर्माद्यर्थफलं ज्ञेयं फलदाता

सदाशिवः ॥ ४५॥ अस्य श्री शिवसहस्रनामस्तोत्रमंत्रस्य ॥ शंभुर्ऋषिः॥ अनु
ष्टुपछंदः ॥ सदाशिवो देवता ॥ महेश्वर इति बीजम् ॥ गौरी शक्तिः॥ सर्वैरिति
कीलकम् ॥ श्रीसांबसदाशिवप्रीत्यर्थे जपे विनियोगः ॥ अथ ध्यानम्॥ शांतं पद्मा
सनस्थं शशिधरमुकुटं पंचवक्त्रं त्रिनेत्रम् शूलं वज्रं च खड्गं परशुमभयदं दक्षि
णांगे वहंतम् ॥ नागं पाशं च घंटां वरडमरुयुतं चांकुशं वामभागे नानालंकारयु-
क्तं स्फटिकमणिनिभं पार्वतीशं नमामि ॥ १॥ इति ध्यानम्॥ हिरण्यबाहुः सेना
नीर्दिक्पतिस्तरुराडुरः ॥ हरिकेशः पशुपतिर्महान्सस्पिंजरो मृडः ॥ १॥ विव्याधि
र्बभ्लुशः श्रेष्ठः परमात्मा सनातनः ॥ सर्वान्नराट् जगत्कर्ता पुष्टीशो नंदिकेश्वरः
॥ २॥ आततायी महारुद्रः संसारास्त्रसुरेश्वरः ॥ उपवीतिरहंतात्मा क्षेत्रेशो वनना
यकः ॥ ३॥ रोहितः स्थपतिः सूतो वाणिज्यो मंत्रिरुन्नतः ॥ क्षेत्रेशो हुतभुग्देवो भुवंतिर्वा
रिवस्कृतः ॥४॥ उच्चैर्घोषो घोररूपः पत्तीशः पाशमोचकः॥ ओषधीशः पंचवक्त्रः कृ
त्स्नवीतो भयानघः ॥ ५ ॥ सहमानः स्वर्णरेता निर्व्याधिर्निरुपप्लुवः ॥ आव्याधिनी
शः ककुभो निषंगी स्तेनरक्षकः ॥ ६॥ मंत्रात्मा तस्कराध्यक्षो वंचकः परिवंचकः ॥

अरण्येशः परिचरो निचेरुस्तायुरक्षकः ॥७॥ प्रकृतीशो गिरिचरः कुलुंचेशो गुहेष्ट
दः ॥ भवः शर्वो नीलकंठः कपर्दी त्रिपुरांतकः ॥८॥ व्युप्तकेशो गिरिशयः सहस्राक्षः
सहस्रपात् ॥ शिपिविष्टश्चंद्रमौली ह्रस्वो मीढुष्टमोऽनघः ॥९॥ वामनो व्यापकः
शूली वर्षीयानजडोऽणुः ॥ ऊर्व्यः सूर्म्योऽग्रियः शीभ्यः प्रथमः पावकाकृतिः ॥
१०॥ अचरस्तारकस्तारो वस्वन्योऽनंतविग्रहः ॥ द्वीप्यः स्त्रोतस्य ईशानो धुर्यो ग-
व्योमनोन्मनः ॥११॥ पूर्वजोऽपरजो ज्येष्ठः कनिष्ठो विश्वलोचनः ॥ अपगल्भ्यो म
ध्यमोर्म्यो जघन्यो बुध्नियः शुभः ॥१२॥ प्रतिसूर्योऽनंतरूपः सोभ्यो याम्यः सुराश्र
यः ॥ खल्यो वर्योऽभयः क्षेम्यः श्लोक्यः पथ्यो नभोग्रणीः ॥१३॥ वन्यो वसान्यः पू
तात्मा श्रवः कक्ष्यः प्रतिश्रवः ॥ आशुषेणो महासेनो महावीरो महारथः ॥१४॥ शूरोऽ
तिघातको वर्मी वरूथी बिल्मिरुद्यतः ॥ श्रुतसेनः श्रुतः साक्षी कवची वशकृद्वशी
॥१५॥ आहनन्योऽनन्यनाथो दुंदुभ्योऽरिष्टनाशकः ॥ धृष्णुः प्रमृशईज्यात्मा
वदान्यो वेदसंमतः ॥ १६॥ तीक्ष्णेषुपाणिः प्रहितः स्वायुधः शस्त्रवित्तमः ॥ सु-

धन्वासुप्रसन्नात्माविश्ववक्त्रः सदागतिः ॥१७॥ श्रुत्यः पथ्योविश्वबाहुः काट्योनी
प्यः शुचिस्मितः ॥ सूद्यः सरस्यो वैशंतोनाद्यः कूप्य ऋषिर्मुनिः ॥१८॥ वट्योवर्ष्यो
वर्णरूपः कुमारः कुशलोमुलः ॥ मेध्योवेद्योमेघशक्तिर्विद्युत्योमेघविक्रमः ॥१९॥
दुराधर्षो दुराराध्योनिर्द्वंद्वो दुःसहप्रदः ॥ ईध्रियः क्रोधशमनोजातूकर्ण्यः पुरुष्टुतः ॥२०॥
आतप्योवायुरजरो वात्यः कात्यायनीप्रियः ॥ वास्तव्योवास्तुपोरेष्म्योविश्वमूर्धावसु
प्रदः ॥ २१॥ सोमस्ताम्रोऽरुणः शंगोरुद्रः सुखकरः सुहृत् ॥ उग्रोऽनुग्रोभीमकर्मा
भीमोभीमपराक्रमः ॥ २२॥ अग्रेवधो हनेयात्माहंता दूरेवधोवधः ॥ शंभुर्मयोभु
र्नित्यश्च शंकरः कीर्तिसागरः ॥२३॥ मयस्करः शिवतरः खंडः परशुजः शुचिः ॥ ती-
र्थ्यः कूल्योमृताधीशः पार्योवार्योऽमृताकरः ॥२४॥ शुद्धः प्रतरणोमुख्यः शुद्धपा-
णिरलोलुपः ॥ उच्चउत्तरणस्तार्यस्तार्यज्ञस्तार्यहृद्गतिः ॥२५॥ आतार्यः सारभू-
तात्मासारग्राही दुरत्ययः ॥ आलाद्योमोक्षदः पथ्योऽनर्थहासत्यसंगरः ॥२६॥ श-
ष्प्यः फेन्यः प्रवाह्यश्चसिकत्यः सैकताश्रयः ॥ इरिण्योग्रामणीः पुण्यः शरण्यः शुद्ध
शासनः ॥२७॥ वरेण्यो यज्ञपुरुषोयज्ञेशोयज्ञनायकः ॥ यज्ञकर्ता यज्ञभोक्ता यज्ञ

विघ्नविनाशकः ॥ २८॥ यज्ञकर्मफलाध्यक्षो यज्ञमूर्तिरनातुरः ॥ प्रपथ्यः किंशि-
लो गेह्यो गृह्यतल्प्यो धनाकरः ॥२९॥ पुलस्त्यः क्षपणो गोष्ठ्यो गोविन्द्रो गीतसत्क्रि
यः ॥ हृदय्यो हृदकृद्धृद्यो गह्वरेष्ठः प्रभाकरः ॥ ३०॥ निवेष्प्यो नियतो यंतापांस
व्यः संप्रतापनः ॥ शुष्क्यो हरित्यः पूतात्मा रजस्यः सात्विकप्रियः ॥ ३१॥ लोप्यो
ऽलोप्यः पर्णशद्यः पर्ण्यः पूर्णः पुरातनः ॥ भूतो भूतपतिर्भूपो भूधरो भूधरायुधः ॥
३२॥ भूतसंगो भूतमूर्तिर्भूतिहा भूतिभूषणः ॥ मदनोमादको माद्यो मदहा मधुर
प्रियः ॥ ३३॥ मधुर्मधुकरः क्रूरो मधुरो मदनांतकः ॥ निरंजनो निराधारो निर्लिप्तो
निरुपाधिकः ॥३४॥ निष्प्रपंचो निराकारो निरीहो निरुपद्रवः ॥ सत्वः सत्वगुणोपे-
तः सत्वविद्सात्वतप्रियः ॥३५॥ सत्वनिष्ठः सत्वमूर्तिः सत्वेशः सत्ववित्तमः ॥ स-
मस्तजगदाधारः समस्तगुणसागरः ॥ ३६॥ समस्त दुःखविध्वंसी समस्तानंद
कारणः ॥ रुद्राक्षमालाभरणो रुद्राक्षप्रियवत्सलः ॥ ३७॥ रुद्राक्षवक्षा रुद्राक्ष
रूपो रुद्राक्षपक्षकः ॥ विश्वेश्वरो वीरभद्रः सम्राट् दक्षमखांतकः ॥ ३८॥ विघ्ने
श्वरो विघ्नकर्ता गुरुर्देवशिखामणिः ॥ भुजगेंद्रलसत्कंठो भुजंगाभरणप्रियः ॥

३९॥ भुजंगविलसत्कर्णो भुजंगवलयावृतः ॥ मुनिवंद्यो मुनिश्रेष्ठो मुनिवृंदनि
षेवितः ॥४०॥ मुनिहृत्पुंडरीकस्थो मुनिसंघैकजीवनः ॥ मुनिमृग्यो वेदमृग्यो
मृगहस्तो मृगेश्वरः ॥४१॥ मृगेंद्रचर्मव्यसनो नारसिंहनिपातनः॥ मृत्युंजयो मृ-
त्युमृत्युरपमृत्युविनाशकः॥४२॥ दुष्टमृत्युरदुष्टेष्टो मृत्युहा मृत्युपूजितः॥ ऊ
र्ध्वो हिरण्यः परमो निधनेशो धनाधिपः ॥४३॥ यजुर्मूर्तिः साममूर्तिर्ऋङ्मूर्तिर्मूर्ति
वर्जितः॥व्यक्तोऽव्यक्तमतोऽव्यक्तो व्यक्ताव्यक्ततमोजवी ॥४४॥ लिंगमूर्तिरलिंगा-
त्मा लिंगालिंगात्मविग्रहः॥ ग्रहग्रहो ग्रहाधारो ग्रहाकारो ग्रहेश्वरः ॥४५॥ ग्रहकृ
द्ग्रहकृद्ग्राही ग्राहग्राहविलक्षणः॥ कल्पाकारः कल्पकर्ता कल्पलक्षणतत्परः ॥
॥४६॥ कल्पः कल्पाकृतिः कल्पनाशकः कल्पकल्पकः॥ परमात्मा प्रधानात्मा
प्रधानपुरुषः शिवः॥ ४७॥ वेद्यो वैद्यो वेदवेद्यो वेदवेदांतसंस्तुतः॥ वेदवक्त्रो
वेदजिह्वो विजिह्वो जिह्मनाशकः॥ ४८॥ कल्याणरूपः कल्याणः कल्याणगुणसंश्र-
यः॥ भक्तकल्याणदो भक्तकामधेनुः सुराधिपः॥४९॥ पवनः पावको वामो महा
कालो मदापहः॥ घोरपातकदावाग्निर्दवभस्मगणप्रियः ॥५०॥ अनंतसोमसूर्या

ग्निमंडलप्रतिमप्रभः॥ जगदेकप्रभुःस्वामीजगद्वंद्योजगन्मयः॥ ५१॥ जगदानं
ददोजन्मजरामरणवर्जितः॥ खट्वांगी नीतिमान् सत्यो देवतात्मात्मसंभवः॥५२॥
कपालमालाभरणः कपाली विष्णुवल्लभः॥ कमलासनकालाग्निःकमलासन-
पूजितः ॥५३॥ कालाधीशस्त्रिकालज्ञो दुष्टावग्रहकारकः॥ नाट्यकर्तानटवरो
महानाट्यविशारदः ॥५४॥ विराड्रूपधरो धीरोविराट् वृषभवाहनः॥ वृषांको
वृषभाधीशो वृषात्मा वृषभध्वजः ॥ ५५॥ महोन्नतोमहाकायोमहावक्षामहा
भुजः॥ महास्कंधोमहाग्रीवो महावक्त्रो महाशिराः ॥५६॥ महाहनुर्महादंष्ट्रो
महोष्ठश्चमहोदरः॥ सुंदरभ्रूःसुनयनःसुललाटः सुकंधरः ॥५७॥ सत्यवाक्यो
धर्मवेत्तासत्यज्ञःसत्यवित्तमः॥ धर्मवान्धर्मनिपुणोधर्मीधर्मप्रवर्तकः॥५८॥
कृतज्ञः कृतकृत्यात्मा कृतकृत्यः कृतागमः॥ कृतवित्कृत्यविच्छ्रेष्ठः कृतज्ञःप्रि
यकृत्तमः ॥५९॥ व्रतकृद्व्रतविच्छ्रेष्ठो व्रतविद्वान्महाव्रती॥ व्रतप्रियोव्रताऽधा
रो व्रताकारो व्रतेश्वरः ॥ ६०॥ अतिरागी वीतरागोरागहेतुर्विरागवित्॥ रागघ्नो
रागशमनो रागदोरागिरागवित् ॥ ६१॥ विद्वान् विद्वत्तमोविद्वज्जनमानससंश्रयः॥

विद्वज्जनाश्रयोविद्वज्जनस्तव्यपराक्रमः ॥६२॥ नीतिकृन्नीतिविन्नीतिप्रदातानी
तिविस्प्रियः ॥ विनीतिवत्सलोनीतिस्वरूपोनीतिसंश्रयः ॥६३॥ क्रोधवित् क्रोध
कृत् क्रोधिजनकृत्क्रोधरूपधृक् ॥ सक्रोधः क्रोधहाक्रोधिजनहाक्रोधकारणः॥६४
॥ गुणवान्गुणविच्छ्रेष्ठोनिर्गुणोगुणविस्प्रियः ॥ गुणाधारोगुणाकारोगुणकृद्गुणनाश
कः॥६५॥ वीर्यवान् वीर्यविच्छ्रेष्ठो वीर्यविद्वीर्यसंश्रयः॥ वीर्याकारोवीर्यकरोवीर्यहा
वीर्यवर्धकः ॥६६॥ कालवित्कालकृत्कालो बलकृद्बलविद्बली॥ मनोन्मनो मनोरू-
पोबलप्रमथनोबलः॥६७॥ विद्याप्रदाताविद्येशो विद्यामात्रैकसंश्रयः॥ विद्याका
रो महाविद्योविद्यावेद्यविशारदः॥६८॥ वसंतकृद्वसंतात्मा वसंतेशो वसंतदः ॥ ग्रीष्मा
त्माग्रीष्मकृद्ग्रीष्मवर्धको ग्रीष्मनाशकः॥६९॥ प्रावृट् कृत्प्रावृषाकालः प्रावृट्काल
प्रवर्तकः ॥ प्रावट् प्रवर्धकः प्रावृट् प्रावृण्णाथः प्रणाशकः॥७०॥ शरदात्माशरद्धेतुः
शरत्काल प्रवर्तकः॥ शरन्नाथः शरत्कालनाशकः शरदाश्रयः॥७१॥ हिमस्वरूपोहिमदो
हिमवान् हिमनाशकः॥ प्राच्यात्मादक्षिणाकारः प्रतीच्यात्मोत्तराकृतिः॥७२॥आग्नेया
त्मानिर्ऋतीशोवायव्यात्मेशनायकः॥ ऊर्ध्वाधःसुदिगाकारोनानादेशैकनायकः॥७३

सर्वपक्षिमृगाकारः सर्वपक्षिमृगाधिपः॥ सर्वपक्षिमृगाधारो मृगाद्युत्पत्तिकारणः॥७४
जीवाध्यक्षो जीववंद्यो जीविनां जीवरक्षकः॥ जीवकृज्जीवहा जीवजीविनो जीवसंश्रयः॥
७५॥ ज्योतिःस्वरूपो विश्वात्मा विश्वनाथो वियत्पतिः॥ वज्रात्मा वज्रहस्तश्च वज्रेशो
वज्रभूषितः॥७६॥ कुमारो गुरुरीशानो गणाध्यक्षो गणाधिपः॥ पिनाकपाणिः सूर्या-
त्मा सोमसूर्याग्निलोचनः॥७७॥ अपाररहितः शांतो दांतो दमयिता दमः॥ ऋषिः पुरा
णपुरुषः पुरुषेशः पुरंदरः॥ ७८॥ कालाग्निरुद्रः सर्वेशः शमरूपः शमेश्वरः॥ प्रलयानल
कृद्दिव्यः प्रलयानलनाशकः॥७९॥ त्र्यंबको ह्यरिषड्वर्गनाशको धनदप्रियः॥ अक्षो
भ्यः क्षोभरहितः क्षोभदः क्षोभनाशकः॥८०॥ सदंभो दंभरहितो दंभदो दंभनाशकः॥
कुंदेंदुशंखधवलो भस्मोद्धूलितविग्रहः॥८१॥ भस्मधारणहृष्टात्मा तुष्टिः पुष्ट्यरि
सूदनः॥ स्थाणुर्दिगंबरो भर्गो भगनेत्रभिदुज्ज्वलः॥८२॥ त्रिकाग्निकालः काला
ग्निरद्वितीयो महायशाः॥ सामप्रियः सामवेत्ता सामगः सामगप्रियः॥८३॥ धीरोदा-
त्तो महाधीरो धैर्यदो धैर्यवर्धकः॥ लावण्यराशिः सर्वज्ञः सुबुद्धिर्बुद्धिमान्वरः॥८४॥
तुंबवीणः कंबुकंठः शंबरारिनिकृंतनः॥ शार्दूलचर्मवसनः पूर्णानंदो जगत्प्रियः॥८५

जयप्रदोजयाध्यक्षोजयात्माजयकारणः॥ जंगमाजंगमाकारोजगदुत्पत्तिकारणः॥८६
जयद्रक्षाकरोवश्योजगत्प्रलयकारणः॥पुष्पदंतभिदुत्कृष्टः पंचयज्ञप्रभंजकः ॥ ८७॥
अष्टमूर्तिर्विश्वमूर्तिरतिमूर्तिरमूर्तिमान्॥ कैलासशिखरावासः कैलासशिखरप्रियः॥८८
भक्तकैलासदःसूक्ष्मः सर्वज्ञःसर्वशिक्षकः॥ सोमःसोमकलाधारो महातेजामहातपः॥८९
हिरण्यश्मश्रुरानंदःस्वर्णकेशःसुवर्णधृक् ॥ ब्रह्माविश्वसृगुर्वीशो मोचकोबंधवर्जितः॥
९०॥ स्वतंत्रःसर्वतंत्रात्माद्युतिमानमितप्रभः॥ पुष्कराक्षःपुण्यकीर्तिःपुण्यश्रवणकी-
र्तनः॥ ९१॥ पुण्यमूर्तिःपुण्यदाता पुण्यापुण्यफलप्रदः॥ सारभूत स्वरमयोरसभूतोरसा
पनः॥ ९२॥ ओंकारः प्रणवोनादः प्रणतार्तिप्रभंजनः॥निकटस्थोऽतिदूरस्थो वशी ब्रह्मांड
नायकः॥९३॥ मंदारमूलनिलयो मंदारकुसुमप्रियः॥ वृंदारकप्रियतमो वृंदारकविराजि
तः॥ ९४॥ श्रीमाननंतकल्याणपरिपूर्णमहोदयः॥ महोत्साहोविश्वभोक्ताविश्वाशाप-
रिपूरकः॥९५॥ सुलभःसुलभालभ्योलभ्यो लाभप्रवर्तकः॥ लाभात्मालाभदोवक्ता
द्युतिमाननसूयकः॥९६॥ ब्रह्मचारी दृढाचारी देवसिंहोधनप्रियः॥ वेदाढ्यो देवदेवे
शो देवदेवोत्तमोत्तमः॥९७॥ बीजराजो बीजहेतुर्बीजदोबीजवृद्धिदः॥ बीजाधारोबीजरू

पो निर्बीजो बीजनाशकः॥ ९८॥ परापरेशः परदः पिंगलो युग्मलोचनः॥ पिंगलाक्षः सु
रगुरुर्गुरुः सुरगुरुप्रियः॥ ९९॥ युगावहो युगाध्यक्षो युगकृद्युगनाशकः॥ कर्पूरगौरो
गौरीशो गौरीगुरुगुहाश्रयः॥ १००॥ धूर्जटिः पिंगलजटो जटामंडलमंडितः॥ मनोज-
वो जीवहेतुरंधकासुरसूदनः॥ १॥ लोकबंधुर्लोकनाथः पांडुरः प्रमथाधिपः॥ अव्यक्त
लक्षणो योगी योगीशो योगपुंगवः॥ २॥ भूतावासो वासुदेवः सुरावासः सुमंगलः॥ भव
वैद्यो योगिवैद्यो योगिसिंहहृदासनः॥ ३॥ उत्तमोऽनुत्तमः शक्तः कालकूटविषादनः
॥ अशास्यः कमनीयात्मा शुभः सुंदरविग्रहः॥ ४॥ भक्तकल्पतरुः स्तोता स्तव्यः स्तोत्र
वरप्रियः॥ अप्रमेयगुणाधारो वेदकृद्वेदविग्रहः॥ ५॥ कीर्त्याधारः कीर्तिकरः कीर्ति-
हेतुरहेतुकः॥ अप्रमृष्यः शांतिभद्रः कीर्तिस्तंभो मनोमयः॥ ६॥ भूशयोऽन्नमयो भो
क्ता महेष्वासो महातनुः॥ विज्ञानमय आनंदमयः प्राणमयोऽन्नदः॥ ७॥ सर्वलोकम-
योयष्टा धर्माधर्मप्रवर्तकः॥ अनिर्विण्णो गुणग्राही सर्वधर्मफलप्रदः॥ ८॥ यंतासुधार्द्र
नयनो निराशीरपरिग्रहः॥ परार्थवृत्तिर्मधुरो मधुरः प्रियदर्शनः॥ ९॥ मुक्तादामपरी
तांगो निःसंगो मंगलाकरः॥ सुखप्रदः सुखाकारः सुखदुःखविवर्जितः॥ ११०॥ विशृं-

खलोजगत्कर्ताजितसर्वः पितामहः ॥ अनपायोऽक्षयो मुंडी सुरूपो रूपवर्जितः ॥११॥
अतींद्रियो महामायो मायावी विगतःस्वरः ॥ अमृतः शाश्वतः शांतो मृत्युहा मृत्युनाश
कः॥ १२॥ महाप्रेतासनासीनः पिशाचानुचरावृतः ॥ गौरीविलास सदनो नानागानविशा
रदः ॥१३॥ विचित्रमाल्यवसनो दिव्यचंदनचर्चितः ॥ विष्णुब्रम्हादि वंद्यांघ्रिः सुरासूरन
मस्कृतः ॥१४॥ किरीटकोटि बालेंदु मणिकंकण भूषितः ॥ रत्नांगदांगो रत्नेशो रत्नरंजि
तपादुकः ॥१५॥ नवरत्नगणोपेतः किरीटी रत्न कंचुकः ॥ नानाविधानेकरत्नलसत्कुंड
लमंडितः ॥१६॥ दिव्यरत्नगणाकीर्ण कंठाभरण भूषितः ॥ नवकालमणिर्नासापुटभ्रा
जिक मौक्तिकः ॥१७॥ रत्नांगुलीयविलसत्करशाखानखप्रभः ॥ रत्नभ्राजद्धेमसूत्रलस
त्कटितटः पटुः ॥१८॥ वामांगभागविलसत्पार्वती वीक्षणप्रियः ॥ लीलाविलंबित वपु
र्भक्तमानसमंदिरः॥१९॥ कुंदमंदारपुष्पौघलसद्वायुनिषेवितः ॥ कस्तूरी विलसद्भाले
दिव्यवेषविराजितः ॥२०॥ दिव्यदेह प्रभाकूट सदीपितदिगंतरः॥ देवासुर गुरुः स्तव्यो
देवासुरनमस्कृतः ॥२१॥ हस्तराजत्पुंडरीकः पुंडरीकनिभेक्षणः ॥ सर्वशास्त्र गुणो
मेयः सर्वलोकेष्ट भूषणः ॥२२॥ सर्वेष्टदाता सर्वेष्ट स्फुरन्मंगलविग्रहः ॥ अविद्याले

शरहितो नानाविद्यैकसंश्रयः ॥ २३ ॥ मूर्तिर्भवः कृपापूरो भक्तेष्टफलपूरकः ॥ संपूर्णकामः
सोमाग्निर्निधिः सौभाग्यदायकः ॥ २४ ॥ हितैषी हितकृत्सौम्यः परार्थैकप्रभंजनः ॥ शरणा
गतदीनार्तपरित्राणपरायणः ॥ २५ ॥ जिष्णुर्नेता वषट्कारो भ्राजिष्णुर्भोजनं हविः ॥ भो
क्ता भोजयिता जेता जितारिर्जितमानसः ॥ २६ ॥ अक्षरः कारणः क्रुद्धः स्मरदः शारदप्लवः
॥ आत्तापकोऽच्छो गंभीरः कविदुःस्वप्ननाशकः ॥ २७ ॥ पंचब्रह्मसमुत्पत्तिः क्षेत्रज्ञः क्षे
त्रपालकः ॥ व्योमकेशो भीमवेषो गौरीपतिरनामयः ॥ २८ ॥ भवाब्धितरणोपायो भग-
वान्भक्तवत्सलः ॥ वरो वरिष्ठो नेदिष्ठः प्रियः प्रियतमः सुधीः ॥ २९ ॥ यंता यविष्ठः क्षोदि
ष्ठः स्थविष्ठो यमशासनः ॥ हिरण्यगर्भो हेमांगो हेमरूपो हिरण्यदः ॥ ३० ॥ ब्रह्मज्योतिर
नावेक्ष्यश्चामुंडाजनको रविः ॥ मोक्षार्थीजनसंसेव्यो मोक्षदो मोक्षनायकः ॥ ३१ ॥ महा
स्मशाननिलयो वेदाश्वो भूरथस्थिरः ॥ मृगव्याधो धर्मधाम प्रच्छिन्नस्फटिको रविः ॥ ३२
सर्वज्ञः परमार्थात्मा ब्रह्मानंदाश्रयो विधुः ॥ महेश्वरो महादेवः परब्रह्म सदाशिवः ॥ ३३ ॥
परब्रह्म सदाशिव इति ॥ एवमेतानि नामानि मुख्यानि मम षण्मुख ॥ शुभदानि विचि-
त्राणि गौर्यै प्रोक्तानि सादरम् ॥ १ ॥ एतन्नामजपे योग्यो विप्रादिश्च मुनीश्वराः ॥ शु-

चिर्भूत्वाशिवपरो नान्याराधनमोहितः ॥ २॥ विभूतिभूषितवपुः शुद्धोरुद्राक्षभूषणः ॥
शिवलिंग समीपस्थोनिःसंगोनिर्जितासनः ॥३॥ एकाग्रचित्तनियतोवशीभूतहितेरतः
॥ शिवलिंगार्चकोनित्यं शिवैकशरणःसदा ॥४॥ ममनामानिदिव्यानियोजपेद्भक्तिपू-
र्वकम् ॥ एवमुक्त गणोपेतःसदेवैः पूजितोभवेत् ॥५॥ संसारपाशसंबंधजनमोक्षेक
साधनम्॥ यन्नामस्मरणान्नूनं तदेव सकलार्थदम् ॥६॥ मन्नामैव परंजप्यमहमेवाक्ष-
यार्थदः ॥ अहमेवसदासेव्यो ध्येयो मुक्त्यर्थमादरात् ॥७॥ विभूति वज्रकवचैर्मन्नामश
रपाणिभिः॥ विजयः सर्वदा लभ्यो नतेषांविद्यतेभयम् ॥८॥ येमुक्तिदायक महेशपि
नाकपाणे। शंभोनिरीश हर शंकर चंद्रमौले ॥ विश्वेश्वरांधकरिपोपुरसूदनेति। मामर्चयं
त्यनुमुदंतितएवधन्याः ॥९॥ देवेशदेवजगदीश्वरपंचवक्त्र । सोमाग्निभानुनयनाग्नि
कशूलपाणे ॥ गौरीमनोरमणमामरिसूदनेति । येचार्चयंत्यनुमुदंतितएवधन्याः ॥१०॥
येवामदेवभवभंजनभूतिभूष। भूतेशखंडपरशोप्रमथाधिनाथ ॥ विश्वाधिकत्रिदशवंद्य
सुरेश्वरेति मामर्चयंत्यनुमुदंतितएव धन्याः॥११॥ येशर्वभालनयनामलविश्वमूर्ते श्रीनी-
लकंठवरदोत्तमविश्वबाहो ॥ भर्गत्रिलोचनभगाक्षहराजरेति मामर्चयंत्यनुमु० ॥१२॥

येविष्णुवल्लभसदाशिव कालकाल कालाग्निरुद्र करुणाकरदीनबंधो॥ कर्पूरगौरपरमेश महेश्वरेति मामर्चयं॰ ॥१३॥ येभीमरुद्रवृषभध्वजवीरभद्र भद्रावतारभगवन्भवभव्यरूप॥ निःसंगनिर्मलनिरंजननिर्गुणेति मामर्च॰ ॥१४॥ येशुद्ध षण्मुखगुरो नृपचापहस्त शार्दूलचर्मवसनाव्ययसत्यसंग॥ शैलाधिराजनिलयत्रिपुरांतकेति मामर्च॰॥ १५॥ येभक्तवत्सलजटापटलावलंबि न्बालेन्दुखंडरुचिमंडलमंडितांग॥ रत्नस्फुरद्भुजगराजविभूषणेति मामर्च॰॥१६॥ येकालकूटविषभीतिभयार्तदेह संरक्षकाद्य विषयाक्षिसमस्तसाक्षिन्॥ सूक्ष्मातिसूक्ष्मशिवदक्षमखांतकेति मामर्च॰ ॥१७॥ येसोमसांबशिपिविष्टजगन्निवास कैलासवासमनुहृत्कमलानिवास॥ सोमावतंसशितिकंठशिवाप्रियेति मामर्चयंत्यनुमुदंतितएवधन्याः॥ १८॥ येयज्ञशाश्वत वृषासनधर्मधाम यज्ञादिकर्मफलदायक यज्ञमूर्ते॥ सृष्टिस्थितिप्रलयकारणसाक्षिकेति मामर्चयंत्यनुमुदंतितएवधन्याः ॥१९॥ येनीललोहितदिगंबर कृत्तिवास श्रीकंठशांतनिरुपाधिकनिर्विकार॥ मृत्युंजयाव्ययनिधीशगणेश्वरेति मामर्चयंत्यनुमुदंति॰॥२०॥ मन्नामामृतपायिनःस्वजननीस्तन्यंपुनःसर्वदा नाकांक्षंतिनचाप्नुवंतिसततं मत्पाद

पद्मार्चकाः॥ मल्लिंगार्चनतत्परा ममहिता मल्लोक एवानिशं संतिष्ठंति निरस्तदुःखनिक
रा मद्भक्तवर्या मुदा ॥२१॥ मल्लिंगसंपूजनसक्तचित्ता मद्भक्तपूजार्थमुपात्तविद्याः॥मन्ना
मसंकीर्तनमात्रमत्ता वसंति मन्नामसुधैकचित्ताः॥ २२॥ संतः क्वचित्संति नितांतमीश
मंतःस्थितं संततमर्चयंतः ॥ मामेव विश्वेशमनाद्यनंत ममोघवेद्यं निगमादिमेकम्॥
२३॥ सूतउवाच ॥ इत्युदीरितमाकर्ण्य महादेवेन तद्वचः ॥ संतुष्टः षण्मुखः शंभुं
तुष्टाव गिरिजासुतः ॥२४॥ षण्मुखउवाच ॥ देवदेव जगन्नाथ देवदेवोत्तम प्रभो ॥
वेदवेदांतवेद्येश जगज्जन्मैककारण ॥२५॥ निराश्रयाखिलाधार निर्द्वंद्व निरुपाधि
क ॥ निष्कलंक निराकार विकाररहितानघ ॥२६॥ महादेवामराधीश वृषांक वृषवा-
हन ॥ वृषभध्वज विश्वेश त्रिपुरांतक शंकर ॥२७॥ कालकाल कृपासिंधो शितिकंठ
शिवाप्रिय ॥ त्रिकाग्निकाल कालात्मन् कालाधार प्रवर्तक ॥२८॥ मनोन्मन मनोऽ
नंत व्योमकेश जगत्पते ॥ भूतेश भूतसंघात्मन् भूतैकनिलयामल॥२९॥ विभूतिभू
षण श्रीमन् भस्मोद्धूलितविग्रह ॥ कैलासशिखरावास कृत्तिवास महेश्वर ॥३०॥ क
पालमालाभरण जरामरणवर्जित ॥ योगीवृंदैक मंदार वृंदारक वरार्चित॥ ३१॥ योगि

हृत्पंकजारूढ निगुढनिजविग्रह ॥ गल्लमंडलसंभ्राजन्मणिकुंडलमंडित ॥ ३२॥ अ-
नंतचंडमार्तंड मंडलाधिकसुप्रभ॥ हिरण्यबाहो विश्वात्मन् संसारार्णवतारक॥ ३३॥
विश्वतोमुखसर्वात्मन् विश्वतश्चरणाच्चर॥ विश्वतो लोचनानंत व्योमकेशसदाशिव॥
३४॥ ज्येष्ठश्रेष्ठसमस्तात्मन् व्यापकानंतविग्रह ॥ त्रिशूलपाणे खट्वांगिन्निःसंगनि
गमाश्रय ॥ ३५॥ निराश्रयनिराधार परब्रम्ह परात्पर॥ ब्रम्हानंदैकनिलयमयस्कर
निरीश्वर ॥ ३६॥ सत्वप्रधानसत्वात्मन्नानंदमयसर्वदा ॥ महास्मशाननिलय महा
प्रेतासनस्थित ॥ ३७॥ पिनाकपाणे दुष्टारे स्विष्टलोकैकजीवन ॥ स्वेच्छाकृतावला
स्दग्धत्रिपुरकानन ॥ ३८॥ वशीकृतानंतवन सोमसूर्याग्निलोचन ॥ मुनिचित्त
समासीन कालकूटविषादन ॥ ३९॥ कंदर्पदर्पदलन वृषाधीशैक वाहन ॥ दुष्टारिसंघ
शमनदुर्लंघ्यदृढशासन ॥ ४०॥ अप्रधृष्यानिरिक्ष्याथ तेजःपुंजनिरंजन॥ सूतीकृ
तस्वतंत्रेष्टहितकृच्चतुरानन ॥ ४१॥ हेमाद्रिशिखरस्वच्छ रत्नचारुस्थितासन ॥ म
होदर महावीर महाशूरजनेश्वर ॥ महावीरा द्भुताकार सर्वलोक प्रभाकर॥ ४२॥ नमस्ते
नमस्ते महादेवशंभो नमस्ते नमस्ते प्रपन्नैकबंधो ॥ नमस्ते नमस्ते दयासारसिंधो

नमस्ते नमस्ते नमस्ते महेश॥४३॥ नमस्ते नमस्ते जगज्जन्म हेतो नमस्ते नमस्ते वृषाधीशकेतो ॥ नमस्तेनमस्ते महापुण्यसेतो नमस्ते नमस्ते नमस्ते महेश ॥४४॥ नमस्तेनमस्ते महामृत्यु हारिन्नमस्ते नमस्ते महादुःख हारिन्॥ नमस्ते नमस्ते महापापहारिन् नमस्ते नमस्ते नमस्ते महेश॥ ४५॥ नमस्ते नमस्ते सदा चंद्रमौले नमस्ते नमस्ते सदाशूलपाणे ॥ नमस्ते नमस्ते ह्यपर्णैकजाने नमस्ते नमस्ते महादुःखहारिन्॥४६॥ यस्यस्वरूपं नविदुः सुरासुरा यस्यस्वरूपंनविदुर्मुनिश्वराः॥ यस्यस्वरूपं नविदुर्यमेश्वरास्तमेवनित्यं शिवमेवमीडे ॥४७॥ यस्यस्वरूपं नगमैकगम्यं यस्यस्वरूपं निजमेकगम्यं॥ यस्यस्वरूपंपरमैकगम्यं तमेवनित्यंशिवमेवमीडे ॥४८॥ संसारदावानलदग्धकाय मृत्युंजयायामितविक्रमाय ॥ सुरासुराद्यर्चितपादुकाय शिवासमेतायनमः शिवाय ॥४९॥ घोराधिका घोघनिवारकाय स्वर्गापवर्गादिफलप्रदाय॥ निरामयायांधकसूदनाय शिवासमेताय नमः शिवाय ॥५०॥ कुंदेन्दुशंखस्फटिकोपमाय महेश्वराया श्रितवत्सलाय॥ श्रीनीलकंठाय यमांतकाय शिवासमेताय नमः शिवाय॥५१॥ भुजंगचक्राधिकभूषणाय नानामणिभ्राजितकुंडलाय॥ कर्पूरगौराय सुरोत्तमाय॥

शिवासमेताय नमः शिवाय ॥ ५२॥ दयासमुद्राय निधीश्वराय धनेशमित्राय सुधाम
पाय ॥ कारुण्यरूपाय मयस्कराय शिवासमेताय नमः शिवाय ॥ ५३॥ त्रिकाग्निकाला
य मनोन्मनाय त्रियंबकाय त्रिपुरांतकाय ॥ कालाग्निरुद्राय जगन्मनाय शिवासमेता
य नमः शिवाय ॥ ५४॥ ब्रह्मेंद्रविष्ण्वादि सुरार्चिताय देवाधिदेवाय दिगंबराय ॥ अनंत
कल्याण गुणार्णवाय शिवासमेताय नमः शिवाय ॥ ५५॥ वेदांतवेद्याय महोदयाय कै-
लासवासाय शिवाधवाय ॥ शिवस्वरूपाय सदाशिवाय शिवासमेताय नमः शिवाय ॥ ५६
इतिस्तुत्वा महादेवं विश्वव्यापिनमीश्वरम् ॥ पुनःपुनः प्रणम्याथ स्कंदस्तस्थौ कृतांजलिः ॥
५७॥ महेश्वरः प्रसन्नात्मा कुमारं नतकंधरम् ॥ प्रीत्या प्रोवाच वचनं सर्वानंदकरं ततः ॥
५८॥ महेश्वर उवाच ॥ प्रहृष्टोऽस्मि प्रसन्नोऽस्मि स्तोत्रेणानेन षण्मुख ॥ वरदोहं व-
रान् स्पष्टान् वृणु दास्ये वरानहम् ॥ ५९॥ स्कंद उवाच ॥ सांबशंभो महादेव दयासागर शं-
कर ॥ मच्चित्तभ्रमरो नित्यं तवास्तु पदपंकजे ॥ ६०॥ सर्वदा शर्व सर्वेश सर्वोत्तम महेश्व
र ॥ तव नामामृतं दिव्यं जिह्वाग्रे मम तिष्ठतु ॥ ६१॥ अनन्यशरणं चित्तं तवैव चरणांबुजे ॥
निवसत्वनिशं शंभो मम देव दयानिधे ॥ ६२॥ शिवास्तु तव पादाब्जे मन्मनो मकरंदपः ॥

चतुर्वर्गफलाकारो मकरंदोविजृंभते ॥६३॥ किंवरेणशिवान्येन मयायद्याचितंपरम्॥
सर्वसौभाग्यदं नूनमितिवेदैर्विनिश्चितम् ॥६४॥ इतितद्वचनंश्रुत्वा सांबः संतुष्टमानसः
॥पस्पर्शतं शिवःसम्यक् सम्यगानन्दपूरकः ६५॥ कुमारतव भाग्यस्य नांतोनूनंनसंश
यः॥ तत्त्वेनमांविदित्वातु विश्वेशंस्तोतुमिच्छसि॥६६॥ त्वयातु याचितंदत्तं मयातुभ्यं
वरोत्तमम् ॥ परात्परंच दास्यामि सर्वलोकोपकारकम् ॥६७॥ त्वयेदं यत्कृतंस्तोत्रं मम
प्रियकरं परम्॥ तद्यः पठेच्छुचिर्नित्यं सर्वमाप्नोत्यभीप्सितम् ॥६८॥ अघोरपातके
भ्यश्च संसाराच्च विमुच्यते॥ भक्तिमानस्तु सततं मयिसांबे महेश्वरे ॥६९॥ सूतउवाच
॥ इतिदत्वावरानिष्टान्सांबःसंसारमोचकः॥ तस्थावतीवसंतुष्टो ब्रह्मविष्ण्वादिसेवितः
॥७०॥ भवंतोऽपि मुनिश्रेष्ठाः सांबध्यानपरायणाः ॥ शिवनामजपं कृत्वातिष्ठंतु सुखि
नःसदा ॥७१॥ शिवएवसदाध्येयःसर्वदेवोत्तमःप्रभुः॥ शिवएवसदापूज्योमुक्तिका
मैर्नसंशयः ॥७२॥ महेशान्नाधिकोदेवः सएवसुरसत्तमः॥ सएवसर्ववेदांतवेद्यो
नात्रास्तिसंशयः ॥७३॥ अनन्यशरणोयस्तु शंकरार्चनतत्परः॥ सएवधर्मःपुण्या-
त्मा सत्यमेवोच्यतेमया ॥७४॥ जन्मांतरसहस्रेषु यदितप्तंतपस्तदा॥ तस्यश्रद्धाम-

ह्रादेव भक्तिश्च भवति ध्रुवम् ॥ ७५॥ मुक्तिदाता महादेवो धन्यो ह्यस्त्येव सर्वदा ॥ सत्य मेतत्पुनः सत्यं सत्यमेव नसंशयः ॥७६॥ सुभगाजननी तस्य तस्यैव कुलमुन्नतम् ॥ तस्यैव जन्मसफलं वश्यः शंभुः सदाशिवः ॥७७॥ येशंभुं सुरसत्तमं सुरगणै राराध्यमीशंशिवं शैलाधीशसुतासमेतममलं संपूजयंत्यादरात् ॥ ते धन्याः शिवपादपूजनपरा धन्यानचान्येजनाः सत्यसत्यमिहोच्यते मुनिवराः सत्यं पुनः सर्वदा ॥७८॥ ऋषिरुवाच ॥ त्वत्प्रसादादिदं सूत विश्वसंतो नसंशयः ॥ धन्याः कृतास्त्वयानूनं सत्कथाश्रवणाद्वयम् ॥ ७९॥ इतिश्रीरुद्रयामले शिवरहस्ये सप्तमांशे कुमारशिवसंवादे शिवसहस्रनामस्तोत्रं समाप्तम् ॥ श्रीसांबसदाशिवार्पणमस्तु ॥

## ॥ अथसहस्रनाम तत्तुल्यस्तोत्रें प्रारभः ॥

### ॥ श्री विष्णूचें ॥

॥ श्रीगणेशायनमः ॥ अर्जुनउवाच ॥ किंनुनाम सहस्राणि जपंतेच पुनःपुनः ॥ यानि नामानि दिव्यानि तानिचाचक्ष्वकेशव ॥१॥ श्रीभगवानुवाच ॥ मत्स्यंकूर्मं वराहंच वामनंचजनार्दनं ॥ गोविंदं पुंडरीकाक्षं माधवं मधुसूदनम् ॥२॥ पद्मनाभं सहस्राक्षं वन

मालिंहलायुधं ॥ गोवर्धनं हृषीकेशं वैकुंठं पुरुषोत्तमम् ॥ ३॥ विश्वरूपं वासुदेवं रामं नारायणं हरिं ॥ दामोदरं श्रीधरंच वेदांगं गरुडध्वजम् ॥ ४॥ अनंतं कृष्णं गोपालं जपतोनास्तिपातकम् ॥ गवांकोटि प्रदानस्य अश्वमेधशतस्यच ॥ ५॥ कन्यादान सहस्त्राणां फलं प्राप्नोतिमानवः ॥ अमायांवा पौर्णिमास्या मेकादश्यांतथैवच ॥ ६॥ संध्याकालेस्मरन्नित्यं प्रातःकालेतथैवच ॥ मध्यान्हेचजपन्नित्यं सर्वपापैः प्रमुच्यते ॥ ७॥ इतिश्री कृष्णार्जुन संवादे विष्णोरष्टाविंशति नामस्तोत्रं संपूर्णम् ॥ श्रीकृष्णार्पणमस्तु ॥

## ॥ श्रीशिवार्चे ॥

॥श्रीगणेशायनमः ॥ शिवोमहेश्वरः शंभुः पिनाकीशशिशेखरः ॥ वामदेवोविरूपाक्षः कपर्दीनील लोहितः ॥ १॥ शंकरः शूलपाणीश्च खट्वांगी विष्णुवल्लभः ॥ शिपिविष्टां बिकानाथः श्रीकंठो भक्तवत्सलः ॥ २॥ भवःशर्वः स्त्रिलोकेशः शितिकंठःशिवःप्रियः ॥ उग्रः कपाली कामारिरंधकासुरसूदनः ॥ ३॥ गंगाधरो ललाटाक्षः कालकालः कृपानिधिः ॥ भीमःपरशुहस्तश्च मृगपाणिर्जटाधरः ॥ ४॥ कैलासवासी कवची कठो

रत्रिपुरांतकः ॥ वृषांको वृषभारूढो भस्मोद्धूलितविग्रहः ॥५॥ सामप्रियः स्वरमयस्त्रियीमूर्तीरनीश्वरः ॥ सर्वज्ञः परमात्मा च सोमसूर्याग्नि लोचनः ॥६॥ हविर्यज्ञमयः सोमः पंचवक्त्रः सदाशिवः ॥ विश्वेश्वरो वीरभद्रो गणनाथः प्रजापतिः ॥७॥ हिरण्यरेता दुर्धर्षो गिरिशो गिरिशोनघः ॥ भुजंगभूषणो भर्गो गिरिधन्वा गिरिप्रियः ॥८॥ कृत्तिवासाः पुरारातिर्भगवान् प्रमथाधिपः ॥ मृत्युंजयः सूक्ष्मतनुर्जगद्व्यापी जगद्गुरुः॥९॥ व्योमकेशो महासेनोजनकश्चारुविक्रमः ॥ रुद्रो भूतपतिः स्थाणुरहिर्बुध्न्यो दिगंबरः ॥१०॥ अष्टमूर्तिरनेकात्मा सात्विकः शुद्धविग्रहः ॥ शाश्वतः खंडपरशुश्चाजः पाशविमोचनः ॥११॥ मृडः पशुपतिर्देवो महादेवोव्ययो हरः ॥ पुष्पदंताभिधानश्च दक्षयज्ञविनाशनः ॥ १२॥ भगनेत्रहरव्यासो सहस्राक्षः सहस्रपात् ॥ अपवर्गप्रदानंतो तारकः पार्वतीपतिः ॥ काशीनाथः पार्वतीशो परमेश्वर सदाशिवो ॥१३॥ अष्टोत्तरशतन्नाम्नां शंभोर्यत्श्री प्रकामदम् ॥ सर्वान्कामानवाप्नोति शिवलोके महीयते ॥१४॥ यइदं पठतेनित्यं श्रद्धाभक्तिसमन्वितः ॥ स्तुतो नाम्नां सहस्रेण ते नाहं नात्र संशयः॥१५॥ इति श्री शिवअष्टोत्तरनामस्तोत्रं संपूर्णम्॥ श्रीशिवार्पणमस्तु॥

## ॥श्रीगणपतीचें ॥

॥श्रीगणेशायनमः॥ ॐ गणंजयोगणपतिर्हेरंबो धरणीधरः ॥ महागणपतिर्लक्षप्र
दःक्षिप्रप्रसादनः ॥१॥ अमोघसिद्धिरमितोमंत्रश्चिंतामणिर्निधिः ॥ सुमंगलोबीज
माशापूरकोवरदःशिवः ॥२॥ काश्यपोनंदनोवाचासिद्धोढुंढिविनायकः ॥ मोदकैरे
भिरत्रैकविंशत्यानामभिःपुमान् ॥३॥ यस्तौतिमद्गतमनामम्माराधनतत्परः ॥ स्तु
तोनाम्नांसहस्रेणतेनाहंनात्रसंशयः ॥४॥ इतिश्री गणेशपुराणांतरगते श्रीगणे
शदिव्यनामस्तोत्रंसंपूर्णम् ॥ श्रीगजाननार्पणमस्तु ॥ ७ ७ ७

## ॥श्रीसूर्याचें॥

॥श्रीगणेशायनमः॥ आदित्यः प्रथमंनामद्वितीयंच दिवाकरः ॥ तृतीयंभास्करः
प्रोक्तोचतुर्थेअर्क एवच ॥ पंचमोभानुदेवश्चज्योतिलिंगश्चषष्टमम् ॥ सप्तमोरविना
मस्यात् एकचक्रतथाष्टमम् ॥२॥ नवमंपद्महस्तश्चदशमंदैत्यनाशनम् ॥ एकाद-
शंकविर्नामंद्वादशंसूर्यनामकः ॥३॥ यइदंपठतेनित्यंसर्वकार्यशुभंभवेत् ॥ सर्व
पीडाहरेत्सूर्य सर्वशत्रुक्षयोभवेत् ॥४॥ जन्मजन्मानियत्पापंकिलिखबालघातकं

ब्रह्महत्या सुरापानं सूर्यनामाद्विमुच्यते ॥५॥ अपुत्रोलभतेपुत्रं धनार्थेलभतेधनम्
॥ विद्यार्थिलभतेविद्या मोक्षार्थेलभतेगतिम् ॥६॥ इतिश्री मार्कंडेय पुराणें सूर्यस्तो
त्रंसंपूर्णम् ॥ श्रीसूर्यनारायणार्पणमस्तु ॥

## ॥ श्रीदेवीचें ॥

॥श्रीगणेशायनमः॥ ॐ अस्यश्री इंद्राक्षीस्तोत्र मंत्रस्य ॥ पुरंदरऋषिः॥ अनु-
ष्टुप्छंदः ॥ इंद्राक्षीदेवता ॥ ह्रीं बीजं ॥ क्लीं कीलकं ॥ सकलकामनासिद्ध्यर्थे
पाठे विनियोगः ॥ अथ ध्यानम् ॥ इंद्राक्षींद्विभुजांदेवीं पीतवस्त्राधरांशुभां ॥ वा-
मेहस्तेवज्रधरांदक्षिणेचाभयप्रदाम् ॥१॥ सहस्त्रनेत्रांसूर्याभांनानालंकारभूषि
ताम् ॥ प्रसन्नवदनांनित्यमप्सरोगणसेवितांम् ॥२॥ श्रीदुर्गासौम्यवदनांपाशांकु
शधरांपरां ॥ त्रैलोक्यमोहिनींदेवीं भवानीं प्रणमाम्यहं ॥३॥ इति ध्यानम् ॥ ॐ
ह्रीं श्रीं इंद्राक्षीं श्रीं पें स्वाहा ॥ इंद्रउवाच ॥ इंद्राक्षीनामसा देवीदैवतैः समुदाहृता
॥ गौरीशाकंभरीदेवी दुर्गानाम्नातिविश्रुता ॥१॥ कात्यायनी महादेवीचंद्रघंटामहा

तपाः ॥ गायत्री साचसावित्री ब्रह्माणी ब्रह्मवादिनी ॥२॥ नारायणी भद्रकाली रु
द्राणी कृष्णा पिंगला ॥ अग्निज्वाला रौद्र मुखी कालरात्रिस्तपस्विनी ॥३॥ मेघश्या
मा सहस्त्राक्षीविष्णु मायाजलोदरी ॥ महो दरी मुक्तकेशी घोररूपा महाबला ॥४॥
आनंदाभद्रजानंदारोगहंत्री शिवप्रिया ॥ शिवदूतीकरालीच प्रत्यक्षापरमेश्वरि॥५॥
इंद्राणीचंद्ररूपाच इंद्रशक्तिपरायणा ॥ महिषासुर संहर्त्री चामुंडागर्भदेवता॥६॥
वाराही नारसिंहीच भीमा भैरव नादिनी ॥ श्रुतिः स्मृति धृतिर्मेधा विद्यालक्ष्मीः सर-
स्वती ॥७॥ आनंदाविजयापूर्णा मानस्तोका पराजिता ॥ भवानी पार्वती दुर्गा हैम
वत्संबिकाशिवा ॥८॥ शिवाभवानीरुद्राणी शंकरार्धशरीरिणी ॥ एतैर्नामपदैर्दि
व्यैः स्तुता शक्रेण धीमता ॥९॥ आयुरारोग्यमैश्वर्यं सुखसंपत्ति कारकम् ॥ क्षया
पस्मार कुष्टादितापज्वर निवारणम् ॥१०॥ शतमावर्तयेद्यस्तु मुच्यते व्याधिबंधना
त् ॥ आवर्तयेत्सहस्त्रेण लभते वांछितं फलम् ॥११॥ राज्या वश्यमवाप्नोति सर्वमे
व नसंशयः ॥ लक्षमेकं जयेद्यस्तु साक्षाद्देवी भविष्यति॥१२॥ त्रिकालंपठतेन्नित्यं ध-
नधान्यंचसंपदः ॥ अर्धरात्रे पठेन्नित्यं मुच्यते पापबंधनात् ॥१३॥ इदंस्तोत्रमिदंपु-

ण्यंजयेतु फलमाप्नुयात् ॥ विनाशयतिरोगाणां अपमृत्युं हरस्तुत ॥१४॥ राज्यार्थी लभतेराज्यं धनार्थी विपुलं धनम् ॥ इच्छाकामंतुकामार्थी धर्मार्थीधर्ममक्षयं ॥१५॥ विद्यार्थीलभतेविद्यां मोक्षार्थीपरमंपदं ॥ इंद्रेणकथितंस्तोत्रं सत्यंसत्यं नसंशयः ॥१६॥ इतिश्री इंद्राक्षीदेवीस्तोत्रंसंपूर्णम् ॥ श्रीजगदंबार्पणमस्तु ॥ ७ ७

॥श्रीरामार्चें॥

॥श्रीगणेशायनमः ॥ ॐ अस्यश्री रामचंद्रद्वादश नामस्तोत्रमंत्रस्य निढिलाक्षोभगवान् ऋषिः अनुष्टुपछंदः ॥ श्रीरामचंद्रोदेवता श्रीरामचंद्र प्रसादसिध्यर्थेजपेविनियोगः ॥ प्रथमं श्रीकरंनित्यं द्वितीयंजानकीपतिम् ॥ तृतीयं रघुनाथंच चतुर्थं रावणांतकम् ॥ १॥ पंचमं लोकपूज्यंच षष्ठमं भरतप्रियम् ॥ सप्तमं वासुदेवंच रामचंद्राष्टमं तथा ॥२॥ नवमं पुंडरीकाक्षं दशमं लक्ष्मणाग्रजम् ॥ एकादशंचगोविंदंद्वादशं सर्व कामदम् ॥३॥ इतिद्वादशनामानित्रिसंध्येयःपठेन्नरः ॥ दारिद्र्यदोषनिर्मुक्तोधनधान्यसमन्वितः ॥४॥ राज्यवश्यसर्ववश्य सर्वकामफलप्रदम् ॥ आरण्यग्रामसंग्रामेसर्वोपद्रव नाशनम् ॥५॥ अर्धरात्रौपठेन्नित्यंसर्वदुःखविनाशनम् ॥ सर्वेष्व

र्यमिदं पुण्यं सर्वमंगलदायकम् ॥ ६॥ इति श्रीब्रह्मांडपुराणे ब्रह्मनारदसंवादे रामचंद्रद्वादशनामस्तोत्रं संपूर्णम् ॥ श्रीरामचंद्रार्पणमस्तु ॥

॥ श्रीदत्तात्रेय ॥

॥ श्रीगणेशायनमः ॥ अस्य श्रीदत्तात्रयस्तोत्रमंत्रस्य ॥ परमहंस ऋषिः ॥ त्रिष्टुपछंदः ॥ परमात्मा देवता ॥ सर्वाभिष्टसिध्यर्थ जपे विनियोगः ॥ व्यास उवाच ॥ प्रथमस्तु महायोगी द्वितीयं प्रभुरीश्वरम् ॥ तृतीयं चित्रमूर्तीच चतुर्थे ज्ञानसागरः ॥१॥ पंचमं ज्ञानविज्ञान षष्टमं सर्वमंगलम् ॥ सप्तमं पुंडरीकाक्षं अष्टमं देववल्लभः ॥२॥ नवमोनंददेवेशं दशमोनंददायकः ॥ एकादशमहारुद्रो द्वादशं करुणाकरः ॥ ३॥ इति द्वादशनामानि दत्तात्रय महात्मने॥ मंत्रराजेति विख्यातो सर्वपापहरंपरम् ॥४॥ क्षयापस्मारकुष्टादितापज्वरनिवारणम्॥ राजद्वारे पथे घोरे संग्रामेषु जलांतरे ॥५॥ गिरीगृहांतरे रम्ये व्याघ्रचोरभयादिषु ॥ आवर्तनं सहस्त्रेषु लभते वांछितंफलम् ॥ ६॥ त्रिकालं पठ्यते यस्तु मोक्षसिद्धिमवाप्नुयात् ॥ दत्तात्रेय सदा रक्षे यस्य सत्य न संशयः ॥७॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम्॥ अपुत्रो लभते पुत्रं रोगी

रोगार्तो मुच्यते ॥ ८॥ अभार्यो लभते भार्यां सुखार्थी लभते सुखम् ॥ मुच्यते सर्वपापे भ्यो सर्वदा विजयी भवेत् ॥ ९॥ इतिश्री व्यासकृत दत्तात्रयस्तोत्रं संपूर्णम् ॥ श्रीदत्तात्रयार्पणमस्तु ॥

## ॥ अथ संकट दुरीकरण कवचें ॥

### ॥ श्रीशिवाचें ॥

॥ श्रीगणेशायनमः ॥ अस्य श्रीशिवकवच स्तोत्र मंत्रस्य ॥ ब्रह्माऋषिः ॥ अनुष्टुपछंदः ॥ श्रीसदाशिवरुद्रोदेवता ॥ ह्रीं शक्तिः ॥ रं कीलकं ॥ श्रीं ह्रीं क्लीं बीजम् ॥ श्री सदाशिव प्रीत्यर्थे शिवकवच स्तोत्र जपे विनियोगः ॥ अथ न्यासः ॥ ॐ नमो भगवते ज्वलज्ज्वालामालिने ॥ ॐ ॐ रां सर्वशक्ति धाम्ने ईशानात्मने अंगुष्ठाभ्यांनमः ॥ ॐ नमो भगवते ज्वलज्ज्वाला मालिने ॐ नं रीं नित्य तृप्ति धाम्ने तत्पुरुषात्मने तर्जनीभ्यां नमः ॥ ॐ नमो भगवते ज्वलज्ज्वालामालिने ॐ मं रूं अनादि शक्ति धाम्ने अघोरात्मने मध्यमाभ्यांनमः ॥ ॐ नमो भगवते ज्वलज्ज्वाला मालिने ॐ शिं रैं स्वतंत्र शक्ति धाम्ने वामदेवात्मने अनामिकाभ्यां नमः ॥ ॐ नमो भगव

वतेज्वलज्ज्वालामालिने ॐ वां रैं अलुप्तशक्तिधाम्ने सद्योजातात्मने कनिष्ठिकाभ्यां नमः ॥ ॐ नमोभगवते ज्वलज्ज्वालामालिने ॐ यं रः अनादिशक्तिधाम्ने सर्वात्मने करतलकरपृष्ठाभ्यांनमः ॥ एवं हृदयादि ॥ अथ ध्यानम् ॥ वज्रदंष्ट्रं त्रिनयनम् कालकंठमरिंदमम् ॥ सहस्रकरमृत्युग्रं वंदे शंभुमुमापतिम् ॥ १॥ अथापरं सर्वपुराणगुह्यं निःशेषपापौघहरं पवित्रम् ॥ जयप्रदं सर्वविपत्प्रमोचनं वक्ष्यामि शैवं कवचं हितायते ॥२॥ ऋषभउवाच ॥ नमस्कृत्य महादेवं विश्वव्यापिनमीश्वरम् ॥ वक्ष्ये शिवमयं वर्म सर्वरक्षाकरं नृणाम् ॥ ३॥ शुचौदेशे समासीनो यथावत्कल्पितासनः ॥ जितेंद्रियोजितप्राणश्चिंतयेच्छिवमव्ययम् ॥४॥ हृत्पुंडरीकांतरसन्निविष्टं स्वतेजसा व्याप्तनभोऽवकाशम् ॥ अतींद्रियं सूक्ष्ममनंतमाद्यं ध्यायेत्परानंदमयं महेशम् ॥५॥ ध्यानावधूताखिलकर्मबंधश्चिरं चिदानंदनिमग्नचेताः षडक्षरन्याससमाहितात्मा शैवेन कुर्यात्कवचेन रक्षाम् ॥ ६॥ मापातु देवोऽखिलदेवतात्मा संसारकूपे पतितं गभीरे ॥ तन्नामदिव्यं वरमंत्रमूलं धुनोतु मे सर्वमघं हृदिस्थम् ॥७॥ सर्वत्रमांरक्षतु विश्वमूर्तिर्ज्योतिर्मयानंदघनश्चिदात्मा ॥ अणोरणीयानुरुश

त्किरेकः सईश्वरः पातुभयादशेषात् ॥८॥ यो भूस्वरूपेणबिभर्ति विश्वं पायात्सभू
मेर्गिरिशोऽष्टमूर्तिः ॥ योऽपां स्वरूपेण नृणां करोति संजीवनं सोऽवतु मां जलेभ्यः॥
९॥ कल्पावसाने भुवनानि दग्ध्वा सर्वाणि यो नृत्यति भूरिलीलः ॥ सकालरुद्रोऽव
तु मां दवाग्नेर्वात्यादिभीतेरखिलाच्च तापात् ॥१०॥ प्रदीप्तविद्युत्कनकावभासोवि
द्यावराभीति कुठारपाणिः ॥ चतुर्मुखस्तत्पुरुषस्त्रिनेत्रः प्राच्यांस्थितं रक्षतु मामज
स्त्रम् ॥११॥ कुठारवेदांकुशपाशशूलकपालढक्काक्षगुणान्दधानः ॥ चतुर्मुखोनी
लरुचिस्त्रिनेत्रः पायादघोरो दिशि दक्षिणस्याम् ॥१२॥ कुंदेंदुशंखस्फटिकावभासो
वेदाक्षमालावरदाभयांकः ॥ त्र्यक्षश्चतुर्वक्त्र उरुप्रभावः सद्योऽधिजातोऽवतु मांप्र
तीच्याम् ॥१३॥ वराक्षमालाभयटंकहस्तः सरोजकिंजल्कसमानवर्णः ॥ त्रिलो-
कनश्चारुचतुर्मुखो मां पायादुदीच्यां दिशि वामदेवः ॥१४॥ वेदाभयेष्टांकुशपाश
टंककपालढक्काक्षकशूलपाणिः ॥ सितद्युतिः पंचमुखोऽवतान्मामीशान ऊर्ध्वे
परमप्रकाशः ॥१५॥ मूर्धानमव्यान्मम चंद्रमौलिर्भालं ममाव्यादथ भालनेत्रः॥
नेत्रे ममाव्याद्भगनेत्रहारी नासां सदा रक्षतु विश्वनाथः ॥१६॥ पायाच्छ्रुती मे

श्रुतिगीतकीर्तिः कपोलमव्यात्सततं कपाली ॥ वक्त्रं सदा रक्षतु पंचवक्त्रो जिह्वां सदा रक्ष-
तु वेदजिह्वः ॥१७॥ कंठं गिरीशोऽवतु नीलकंठः पाणिद्वयं पातु पिनाकपाणिः ॥ दोर्मू-
लमव्यान्मम धर्मबाहुर्वक्षःस्थलं दक्षमखांतकोऽव्यात् ॥१८॥ ममोदरं पातु गिरींद्र-
धन्वा मध्यं ममाव्यान्मदनांतकारी ॥ हेरंबतातो मम पातु नाभिं पायात्कटिं धूर्जटिरी-
श्वरो मे ॥१९॥ ऊरुद्वयं पातु कुबेरमित्रो जानुद्वयं मे जगदीश्वरोऽव्यात् ॥ जंघायुगं
पुंगवकेतुरव्यात्पादौ ममाव्यात्सुरवंद्यपादः ॥२०॥ महेश्वरः पातु दिनादियामे मां म-
ध्ययामेऽवतु वामदेवः ॥ त्रिलोचनः पातु तृतीययामे वृषध्वजः पातु दिनांत्ययामे ॥
२१॥ पायान्निशादौ शशिशेखरो मां गंगाधरो रक्षतु मां निशीथे ॥ गौरीपतिः पातु नि-
शावसाने मृत्युंजयो रक्षतु सर्वकालम् ॥२२॥ अंतःस्थितं रक्षतु शंकरो मां स्थाणुः स-
दा पातु बहिःस्थितं माम् ॥ तदंतरे पातु पतिः पशूनां सदाशिवो रक्षतु मां समंतात् ॥
२३॥ तिष्ठंतमव्याद्भुवनैकनाथः पायाद्व्रजंतं प्रमथाधिनाथः ॥ वेदांतवेद्योऽवतु मां
निषण्णं मामव्ययः पातु शिवः शयानम् ॥२४॥ मार्गेषु मां रक्षतु नीलकंठः शैलादिदु-
र्गेषु पुरत्रयारिः ॥ अरण्यवासादिमहाप्रवासे पायान्मृगव्याध उदारशक्तिः ॥२५॥

कल्पान्तकाटोपपटुप्रकोप स्फुटाट्टहासोच्चलितांडकोशः ॥ घोरारिसेनार्णवदुर्निवारान्महाभयाद्रक्षतु वीरभद्रः ॥२६॥ पत्त्यश्वमातंगरथावरूथ सहस्रलक्षायुतकोटिभीषणम् ॥ अक्षौहिणीनां शतमाततायिनां छिंद्यान्मृडो घोरकुठारधारया ॥२७॥ निहंतु दस्यून्प्रलयानलार्चिर्ज्वलत्त्रिशूलम्त्रिपुरांतकस्य ॥ शार्दूलसिंहर्क्षवृकादिहिंस्रान्संत्रासयत्वीशधनुः पिनाकः ॥२८॥ दुःस्वप्न दुःशकुन दुर्गति दौर्मनस्य दुर्भिक्षदुर्व्यसनदुःसह दुर्यशांसि ॥ उत्पात ताप विषभीतिमसद्ग्रहार्तिं व्याधींश्च नाशयतु मे जगतामधीशः ॥२९॥ ॐ नमो भगवते सदाशिवाय सकलतत्त्वात्मकाय सर्वमंत्रस्वरूपाय सर्वयंत्राधिष्ठिताय सर्वतंत्रस्वरूपाय सर्वतत्त्वविदूराय ब्रम्हरुद्रावतारिणे नीलकंठाय पार्वतीमनोहरप्रियाय सोमसूर्याग्निलोचनाय भस्मोद्धूलितविग्रहाय महामणिमुकुटधारणाय माणिक्यभूषणाय सृष्टिस्थितिप्रलयकालरौद्रावताराय दक्षाध्वरध्वंसकाय महाकालभेदनाय मूलाधारैकनिलयाय तत्त्वातीताय गंगाधराय सर्वदेवाधिदेवाय षडाश्रयाय वेदांतसाराय त्रिवर्गसाधनायानंतकोटिब्रम्हांडनायकायाऽनन्तवासुकितक्षककर्कोटकशंखकुलिकपद्ममहापद्मेत्यष्टमहानागकुलभूषणाय प्रणवस्वरूपाय चि

दाकाशायाकाशदिक्स्वरूपाय ग्रहनक्षत्रमालिने सकलाय कलंकरहिताय सकललोकै
ककर्त्रे सकललोकैकभर्त्रे सकललोकैकसंहर्त्रे सकललोकैकगुरवे सकललोकैकसाक्षि
णे सकलनिगमगुह्याय सकलवेदांतपारगाय सकललोकैकवरप्रदाय सकललोकैक
शंकराय शशांकशेखराय शाश्वतनिजावासाय निराभासाय निरामयाय निर्मलाय नि
र्लोभाय निर्मदाय निश्चिंताय निरहंकाराय निरंकुशाय निष्कलंकाय निर्गुणाय निष्का
माय निरुपप्लवाय निरवद्याय निरंतराय निष्कारणाय निरातंकाय निष्प्रपंचाय निः
संगाय निर्द्वन्द्वाय निराधाराय नीरागाय निष्क्रोधाय निर्मलाय निष्पापाय निर्भयाय
निर्विकल्पाय निर्भेदाय निष्क्रियाय निस्तुलाय निःसंशयाय निरंजनाय निरुपमवि
भवाय नित्यशुद्धबुद्धपरिपूर्णसच्चिदानंदाद्वयाय परमशांतस्वरूपाय तेजोरूपाय ते
जोमयाय जयजयरुद्र महारौद्र भद्रावतार महाभैरव कालभैरव कल्पांतभैरव कपा-
लमालाधर खट्वांगखड्गचर्म पाशांकुश डमरु शूल चापबाणगदाशक्तिभिंडिमालातो
मर मुसल मुद्गर पाश परिघ भुशुण्डी शतघ्नीचक्राद्यायुधभीषणकर सहस्रमुखदंष्ट्रा
करालवदनविकटाट्टहासविस्फारित ब्रम्हांडमंडल नागेन्द्रकुंडल नागेन्द्रहार नागेन्द्र

वलय नागेंद्रचर्मधर मृत्युंजय त्र्यंबक त्रिपुरांतक विश्वरूप विरूपाक्ष विश्वेश्वर वृ
षभवाहन विश्वतोमुख सर्वतो रक्षरक्ष मांज्वलज्वल महामृत्युमपमृत्युभयं नाशय
नाशय चोरभयमुत्सादयोत्सादय विषसर्पभयं शमयशमय चोरान्मारय मारय मम
शत्रूनुच्चाटयोच्चाटय त्रिशूलेन विदारय विदारय कुठारेण भिंधिभिंधि खड्गेनछिंधि
छिंधि खट्वांगेन विपोथय विपोथय मुसलेन निष्पेषय निष्पेषय बाणैः संताडय संताड
य रक्षांसि भीषय भीषयाशेषभूतानि विद्रावय विद्रावय कुष्मांडवेतालमारीगणब्रह्म
राक्षसगणान् संत्रासय संत्रासय ममाभयं कुरुकुरु वित्रस्तं मामाश्वासयाश्वासय नरक
महाभयान्मामुद्धरोद्धर संजीवय संजीवय क्षुत्तृड्भ्यां ममाप्यायाप्यायय दुःखातुरं
मामानंदयानंदय शिवकवचेन मामाच्छादयाच्छादय मृत्युंजय त्र्यंबक सदाशिव नमस्ते
नमस्ते ॥ ऋषभ उवाच ॥ इत्येतत्कवचं शैवं वरदं व्याहृतं मया ॥ सर्वबाधाप्रशम
नं रहस्यं सर्वदेहिनाम् ॥३०॥ यः सदा धारयन्मर्त्यः शैवं कवचमुत्तमम् ॥ नतस्यजा
यते क्वापि भयं शंभोरनुग्रहात् ॥३१॥ क्षीणायुः प्राप्तमृत्युर्वा महारोगहतोऽपिवा ॥
सद्यः सुखमवाप्नोति दीर्घमायुश्च विंदति ॥३२॥ सर्वदारिद्र्यशमनं सौमंगल्यविवर्धनं

॥ यो धत्ते कवचं शैवं सदेवैरपि पूज्यते ॥३३॥ महापातकसंघातैर्मुच्यतेचोपपातकैः
॥ देहांते मुक्तिमाप्नोति शिववर्मानुभावतः ॥३४॥ त्वमपि श्रद्धया वत्स शैवं कवचमुत्तमम्
॥ धारयस्व मया दत्तं सद्यः श्रेयो ह्यवाप्स्यसि ॥३५॥ सूत उवाच ॥ इत्युक्त्वा ऋषभो यो
गी तस्मै पार्थिवसूनवे ॥ ददौ शंखं महारावं खड्गं चारिनिषूदनम् ॥ ३६॥ पुनश्च भस्म
संमंत्र्य तदंगं परितोऽस्पृशत् ॥ गजानां षट्सहस्रस्य द्विगुणस्य बलं ददौ ॥ ३७॥
भस्मप्रभावात्संप्राप्य बलैश्वर्य धृतिस्मृतिः ॥ स राजपुत्रः शुशुभे शरदर्क इव श्रिया ॥ ३८॥
तमाह प्रांजलिं भूयः स योगी नृपनंदनम् ॥ एष खड्गो मया दत्तस्तपोमंत्रानुभावितः ॥ ३९॥
शितधारमिमं खड्गं यस्मै दर्शयसे स्फुटम् ॥ स सद्यो म्रियते शत्रुः साक्षान्मृत्युरपि स्वयम् ॥
४०॥ अस्य शंखस्य निर्ह्रादं ये शृण्वंति तवाहिताः ॥ ते मूर्छिताः पतिष्यंति न्यस्तशस्त्रा वि
चेतनाः ॥ ४१॥ खड्गशंखाविमौ दिव्यौ परसैन्यविनाशिनौ ॥ आत्मसैन्यस्वपक्षाणां
शौर्यतेजोविवर्धनौ ॥४२॥ एतयोश्च प्रभावेण शैवेन कवचेन च ॥ द्विषट्सहस्र
नागानां बलेन महतापि च ॥ ४३॥ भस्मधारणसामर्थ्याच्छत्रुसैन्यं विजेष्यसि ॥
प्राप्य सिंहासनं पित्र्यं गोप्तासि पृथिवीमिमाम् ॥४४॥ इति भद्रायुषं सम्यगनुशास्य

समातृकम् ॥ ताभ्यां संपूजितः सोऽथ योगी स्वैरगतिर्ययौ ॥ ४५ ॥ इति श्रीस्कंदपुराणे ब्रम्होत्तरखंडे शिववर्मकथनं नाम द्वादशोऽध्यायः ॥ श्रीसांबसदाशिवार्पणमस्तु.

॥ श्री नारायणार्चे ॥

॥श्रीगणेशायनमः॥ राजोवाच ॥ येनगुप्तः सहस्राक्षः सवाहान्रिपुसैनिकान् ॥ क्रीडन्निवविनिर्जित्यत्रिलोक्याबुभुजेश्रियम् ॥१॥ भगवंस्तन्ममाख्याहि वर्मनारायणात्मकम् ॥ यथाऽततायिनःशत्रून् येनगुप्तोऽजयन्मृधे ॥२॥ श्रीशुकउवाच ॥ वृत्तः पुरोहितस्त्वाष्ट्रोमहेंद्रायानुपृच्छते ॥ नारायणाख्यं वर्माहतदिहैकमनाःशृणु ॥३॥ विश्वरूपउवाच ॥ धौतांघ्रिपाणिराचम्यसपवित्रउदङ्मुखः ॥ कृतस्वांग करन्यासो मंत्राभ्यांवाग्यतः शुचिः ॥४॥ नारायणमयंवर्मसन्नह्येद्भय आगते ॥ दैवभूतात्मकर्मभ्यो नारायणमयःपुमान् ॥५॥ पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥ मुखे शिरस्यानुपूर्व्यादोंकारादिनिविन्यसेत् ॥६॥ ॐ नमो नारायणायेतिविपर्ययमथापिवा ॥ करन्यासंततः कुर्याद्द्वादशाक्षरविद्यया ॥७॥ प्रणवादियकारांतमंगुल्यंगुष्ठपर्वसु ॥ न्यसेद्धृदयमोंकारंविकारमनुमूर्धनि ॥८॥ षकारंतु भ्रुवोर्मध्येणकारं

शिखयान्यसेत् ॥ वेकारं नेत्रयोर्युंज्यान्नकारं सर्वसंधिषु ॥९॥ मकारमस्त्रमुद्दिश्य
मंत्रमूर्तिर्भवेद्बुधः ॥ सविसर्गं फडंतं तत्सर्वदिक्षु विनिर्दिशेत् ॥१०॥ ॐ विष्णवे नमः
॥ इत्यात्मानं परं ध्यायेद्ध्येयं षट्शक्तिभिर्युतम् ॥ विद्यातेजस्तपोमूर्तिमिमं मंत्र मु-
दाहरेत् ॥११॥ ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्तांघ्रिपद्मः पतगेंद्रपृष्ठे ॥ दरारि
चर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः ॥१२॥ जलेषु मां रक्षतु मत्स्यमू-
र्तिर्यादोगणेभ्यो वरुणस्य पाशात् ॥ स्थलेषु मायाबटुवामनोऽव्यात्त्रिविक्रमः खेऽव
तु विश्वरूपः ॥१३॥ दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोऽसुरयूथपारिः ॥
विमुंचतो यस्य महाऽट्टहासं दिशो विनेदुर्न्यपतंश्च गर्भाः ॥१४॥ रक्षत्वसौ मा
ध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ॥ रामोद्रिऽकूटेष्वथ विप्रवासे सलक्ष्म
णोऽव्याद्भरताग्रजो माम् ॥१५॥ मामुग्रधर्मादखिलात्प्रमादान्नारायणः पातु नर
श्च हासात् ॥ दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबंधात् ॥१६॥
सनत्कुमारोऽवतु कामदेवाद्धयाननो मां पथि देवहेलनात् ॥ देवर्षिवर्यः पुरुषार्चनां
तरात्कूर्मो हरिर्मां निरयादशेषात् ॥१७॥ धन्वंतरिर्भगवान्पात्वपथ्याद्द्वंद्वाद्भयादृष

भोनिर्जितात्मा ॥ यज्ञश्च लोकादवताज्जनांताद्बलो गणात्क्रोधवशादहींद्रः ॥१८॥
द्वैपायनो भगवानप्रबोधाद्बुद्धस्तु पाषंडगणात्प्रमादात् ॥ कल्किः कलेः कालमलात्प्र-
पातु धर्मावनायोरुकृतावतारः ॥१९॥ मां केशवो गदया प्रातरव्याद्गोविंद आसंगवमात्त
वेणुः ॥ नारायणः प्राह्ण उदात्तशक्तिर्मध्यंदिने विष्णुररींद्रपाणिः ॥२०॥ देवोऽपरा
ह्णे मधुहोग्रधन्वा सायंत्रिधामाऽवतु माधवो माम् ॥ दोषे हृषीकेश उतार्धरात्रे निशीथ
एकोऽवतु पद्मनाभः ॥२१॥ श्रीवत्सधामापररात्र ईशः प्रत्यूष ईशोऽसिधरो जनार्दनः
॥ दामोदरोऽव्यादनुसंध्यं प्रभाते विश्वेश्वरो भगवान्कालमूर्तिः ॥२२॥ चक्रं युगांता
नलतिग्मनेमि भ्रमत्समंताद्भगवत्प्रयुक्तम् ॥ दंदग्धि दंदग्ध्यरिसैन्यमाशु कक्षं यथा वात
सखो हुताशः ॥२३॥ गदेशनिस्पर्शनविस्फुलिंगे निष्पिंढि निष्पिंढ्यजितप्रियासि ॥ कुष्मांड
वैनायकयक्षरक्षोभूतग्रहांश्चूर्णय चूर्णयारीन् २४ त्वं यातुधानप्रमथप्रेतमातृपिशाचवि-
प्रग्रहघोरदृष्टीन् ॥ दरेंद्र विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कंपयन् ॥२५॥
त्वं तिग्मधारासिवरारिसैन्यमीशप्रयुक्तो मम छिंधि छिंधि ॥ चक्षूंषि चर्मन् शतचंद्र छादय द्विषा
मघोनां हर पापचक्षुषां २६ यन्नो भयं ग्रहेभ्यो भूत्केतुभ्यो नृभ्य एव च ॥ सरीसृपेभ्यो दंष्ट्रिभ्यो

भूतेभ्योघेभ्यएवच ॥ २७॥ सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ॥ प्रयांतु सं-
क्षयं सद्योयेन्येश्रेयःप्रतीपकाः ॥२८॥ गरुडोभगवांस्तोत्रस्तोभश्छंदोमयप्रभुः ॥
रक्षत्वशेषकृच्छ्रेभ्योविष्वक्सेनस्य वाहनम् ॥२९॥ सर्वापद्भ्योहरेर्नामरूपयानायुधा
निनः ॥ बुद्धींद्रियमनःप्राणान्पांतु पार्षदभूषणाः ॥३०॥ यथाहि भगवानेव वस्तुतः
सदसच्चयत् ॥ सत्येनानेन नःसर्वे यांतुनाशमुपद्रवाः ॥३१॥ यथैकात्म्यानुभावानां
विकल्परहितस्वयम् ॥ भूषणायुधलिंगाख्याधत्तेशक्तीःस्वमायया ॥३२॥ तेनैव
सत्यमानेन सर्वज्ञो भगवान् हरिः ॥ पातु सर्वैस्वरूपैर्नःसदासर्वत्रसर्वगः ॥३३॥ वि
दिक्षुदिक्षूर्ध्वमधःसमंतादंतर्बहिर्भगवान्नारसिंहः ॥ प्रहापयँल्लोकभयंस्वनेन स्व
तेजसाग्रस्तसमस्ततेजाः ॥ ३४॥ मघवन्निदमाख्यातं वर्म नारायणात्मकम् ॥ वि
जेष्य स्यंजसायेन दंशितोसुरयूथपान् ॥३५॥ एतद्धारयमाणस्तु यंयंपश्यति चक्षु
षा ॥ पदावासंस्पृशेत्सद्यःसाध्वसात्सविमुच्यते ॥३६॥ नकुतश्चिद्भयंतस्यवि-
द्यांधारयतोभवेत् ॥ राजदस्युग्रहादिभ्योव्याध्यादिभ्यश्चकर्हिचित् ॥३७॥ इमांवि
द्यांपुराकश्चित्कौशिकोधारयन्द्विजः ॥ योगधारणयास्वांगंजहौसमरुधन्वनि ॥३८॥

तस्योपरि विमानेन गंधर्वपतिरेकदा ॥ ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥३९॥ गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्शिराः ॥ सवालखिल्यवचनादस्थीन्यादाय विस्मितः ॥४०॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात् ॥ य इदं शृणुयात्काले यो धारयति चादृतः ॥ तं नमस्यंति भूतानि मुच्यते सर्वतो भयात् ॥४१॥ श्रीशुक उवाच ॥ एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ॥ त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥४२॥ इति श्रीमद्भागवते महापुराणेऽष्टादशसाहस्र्यां संहितायां वैयासिक्यां षष्ठस्कंधे नारायणवर्मकथनं नामाष्टमोऽध्यायः ॥ श्रीकृष्णार्पणमस्तु ॥ ६ ६

॥ श्री पंचमुखी हनुमानाचें ॥

॥श्रीगणेशाय नमः ॥ अस्य श्री पंचमुखी हनुमत्कवचस्तोत्रमंत्रस्य ॥ रामचंद्र ऋषिः ॥ अनुष्टुपछंदः ॥ पंचमुखी हनुमान्देवता ॥ मारुतात्मजेति बीजम् ॥ अंजनीसूनुरिति शक्तिः ॥ लक्ष्मणप्राणदातेति कीलकम् ॥ श्रीरामचंद्रहनुमत्प्रसादसिद्ध्यर्थे पंचमुखी हनुमत्कवचस्तोत्रजपे विनियोगः ॥ तत्रादौ न्यासः ॥ ॐ अंजनीसूनवे अंगुष्ठाभ्यां नमः ॥ ॐ रुद्रमूर्तये तर्जनीभ्यां नमः ॥ ॐ वायुपुत्राय मध्यमाभ्यां नमः ॥

ॐ अग्निगर्भाय अनामिकाभ्यांनमः ॥ ॐ रामदूताय कनिष्ठिकाभ्यांनमः ॥ ॐ पंच
मुखी हनुमते करतलकरपृष्ठाभ्यांनमः ॥ अथ हृदयादिन्यासः ॥ ॐ अंजनीसूनवेहृ
दयायनमः ॥ ॐ रुद्रमूर्तयेशिरसेस्वाहा ॥ ॐ वायुपुत्रायशिखायैवषट् ॥ ॐ अ-
ग्निगर्भाय कवचायहुम् ॥ ॐ रामदूताय नेत्रत्रयाय वौषट् ॥ ॐ पंचमुखी हनुमतेइ-
ति अस्त्रायफट् ॥ ॐ भूर्भुवःस्वरोम् इतिदिग्बंधः ॥ अथ ध्यानम् ॥ ध्यायेद्वानर
नारसिंहखगराट्क्रोडाश्ववक्त्रस्फुटं पद्माक्षं स्फुटपंचवक्त्ररुचिरं बालार्ककोटिद्युति
म् ॥ हस्तेशूलकपालमुद्गरहलं कौमोदकी भूरुहं खड्वांगांकुशपाशपर्वतधरं पीतांबरंवा
नरम् ॥१॥ पंचवक्त्रं महाभीमं त्रिपंचनयनैर्युतम् ॥ कोटिसूर्यकराभासं कपिवक्त्रं सुते
जसम् ॥२॥ दंष्ट्राकरालवदनं भ्रुकुटीकुटिलेक्षणम् ॥ यस्यप्रदक्षिणंवक्त्रं नारसिंहंमहा
द्भुतम् ॥३॥ पश्चिमं गारुडंवक्त्रं वज्रतुंडमहाबलम् ॥ सर्वनागप्रमथनं विषभूतनिकृं
तनम् ॥४॥ उत्तरं सूकरं वक्त्रं कृष्णदीप्तनभोपमम् ॥ पातालनिधिभेत्तारं ज्वररोगादि
कृंतनम् ॥५॥ ऊर्ध्वं हयाननं घोरं दानवांतकरं परम् ॥ पंचवक्त्रेणदेवेशितारकाख्योम
हाहवे ॥६॥ कुर्वन्त्सर्वनिदानानि पातालवणांभसि ॥ खड्गत्रिशूलखट्वांगं पाशमंकु-

शपवीतम् ॥७॥ द्रुमं कौमोदकीमुंडं दधानं हलमुत्कटम् ॥ दिव्यमाल्यांबरधरं दिव्यगंधानुलेपनम् ॥८॥ पीतांबरधरं देवं दिव्याभरणभूषितम् ॥ प्रेतासनोपविष्टं तं पंचवक्त्रधरं विभुम् ॥९॥ विनियोगकरं विश्वमोहनं सर्वसाधनम् ॥ सर्वरोगप्रशमनं सर्वपापहरं परम् ॥१०॥ सर्वशत्रुक्षयकरं सर्वकामार्थदायकम् ॥ पंचवक्त्रं हनुमंतं सर्वलोकैकपूजितम् ॥ एवं ध्यात्वा जपेन्मंत्रं प्रत्यहं नियतः पुमान् ॥११॥ उद्यन्मार्तंडकोटिप्रकटरुचियुतं चारुवीरासनस्थं मौंजीयज्ञोपवीताभरणमुरुशिखाशोभितं कुंडलाभ्याम् ॥ भक्तानामिष्टदं तं प्रणतमुनिजनैर्वेदनादप्रमोदं ध्यायेद्देवं विधेयं प्लवगकुलपतिं गोष्पदीभूतवार्धिम् ॥१२॥ श्रीरामदूताय आंजनेयाय वायुपुत्राय महाबलाय सीतादुःखनिवारणाय लंकाविदाहकाय महाबलप्रचंडाय फाल्गुनसखाय कोलाहलसकलब्रम्हांडपालकाय सप्तसमुद्रनिरालंघिताय पिंगलनयनायामितविक्रमाय सूर्यबिंबफलसेवकाय दुष्टनिरालंबकृताय संजीवनीसमानयनसमर्थाय अंगदलक्ष्मणकपिसैन्यप्राणनिर्वाहकाय दशकंठविध्वंसनाय रामेष्टफाल्गुनसखाय सीतासहितरामचंद्रप्रसादकाय षट्प्रयोगागमपंचमुखीहनुमते नमः ॥ ॐ ह्रीं हरिमर्कटमर्कटाय वं वं वं वं वं वष

द् स्वाहा ॥ ॐ ह्रीं हरि मर्कटमर्कटाय फं फं फं फं फं फट् स्वाहा॥ॐ ह्रीं हरि मर्कटमर्क
टाय फुं फुं फुं फुं फुं द्विषट् विनाशाय स्वाहा ॥ ॐ ह्रीं हरि मर्कट मर्कटाय खें खें खें
खें खें मारणायस्वाहा ॥ ॐ ह्रीं हरि मर्कटमर्कटाय ठं ठं ठं ठं ठं स्तंभनाय स्वाहा॥
ॐ ह्रीं हरिमर्कट मर्कटाय ऊं ऊं ऊं ऊं ऊं आक्रमसि सकलसंपत्कराय स्वाहा ॥ ॐ ह्रीं
हरिमर्कटमर्कटाय ऊर्ध्वमुखे हयग्रीवाय रुं रुं रुं रुं रुं रुद्रमूर्तये सकलजननिर्वाहका
रिणे पंचमुखी वीर हनुमते स्वाहा ॥ उच्चाटनं कुरु कुरु राज्यं छं छं छं छं छं सकल
मूर्तये पंचमुखी वीरहनुमते परमंत्र परतंत्र उच्चाटनाय स्वाहा ॥ ॐ कं खं गं घं ङं चं
छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं स्वाहा ॥
इति दिग्बंधः ॥ पूर्वमुखे पंचमुखी हनुमते महारुद्राय हों ढं ढं ढं ढं ढं सकलशत्रुसं
हारणायस्वाहा ॥ दक्षिण मुखे पंचमुखी हनुमते करालनृसिंहाय क्ष्णों हां हां हां हां हां
सकल भूत प्रेतदमनायस्वाहा ॥ पश्चिम मुखे वीरगरुडाय पंचमुखी हनुमते ग्लौं मं मं
मं मं मं सकलविषहराय स्वाहा ॥ उत्तरमुखे आदिवराहाय हुं लं लं लं लं लं सिंहनील
कंठमूर्तये पंचमुखी हनुमते अंजनीसुताय वायुपुत्राय सीतादुःखनिवारणाय लक्ष्म

